किं येन सृजसि व्यक्तमुत येन बिभर्षि तत् ।
अथ विश्वस्य संहर्ता भागः कतम एष ते ॥

(कु ६, १३)

One is struck with the ideas which are more or less common, expressed in his praises of Brahma, Visnu and Siva It is evident that he held the view that all these three Gods are of equal importance and that they can be held as the One God who has assumed three different forms. This identity of the trinity of Gods is to be traced to the Śruti, Smrti, Purana, Itihasa, Brahma sutra, Bhagavadgita, Bhagavata, the Sahasranamas and other ancient works Kalidasa has expressed plainly that the three Gods are one and the same without any difference in status

एकैव मूर्तिर्बिभिदे त्रिधा सा
सामान्यमेषा प्रथमावरत्वम् ।
विष्णोर्हरस्तस्य हरि कदाचि
द्वेधास्तयोस्तावपि धातुराद्यौ ॥

(कु ७, ४४)

It is to be wondered that when this truth of the oneness of the God is clearly established, certain schools of thought, who profess their origin from the authority of the Vedas, regard a particular God as the most supreme one The Saivas basing their views on the authority of a few Upanisads like Atharva Siras, Atharva Sikhā, Kaivalya, etc, which deal with the greatness of Śiva, hold that Siva is the greatest of Gods and assign to Viṣnu and Brahmā a subordinate position Similarly, a few Vaisnavites deriving the authority from Mahanarayana, Nrsimhatapanī and other Upanisads extolling Viṣṇu, declare, that Visṇu is the highest of all Gods Similarly, a few persons of immature minds have certain Istadevatas who alone are regarded by them as the highest of all the Gods.

By a *careful* examination according to accepted scientific principles of interpretation of the Upaniṣads like Śvetāśvatara, Garbha, Brahma, Maitrāyaṇa, Brāhmaṇa, Taittirīya, Kaṭha, Nṛsiṁhatāpanī, Skānda, the Purāṇas like Brahmāṇḍa, Viṣṇudharmottara, Varāha, Āgneya, Viṣṇu, etc., the Itihāsas like Mahābhārata, Harivaṁśa and Rāmāyaṇa, the Bhagavad-Gītā Īśvara Gītā, Śruti Gītā, the *Viṣṇu Sahasranāma* and Brahma Sūtra, it will become transparent like crystal that there is absolutely no difference among the three Gods. A few quotations given below will make the above statement proved beyond any doubt.

शिवाय विष्णुरूपाय शिवरूपाय विष्णवे ।
शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः ॥

यथा शिवमयो विष्णुरेवं विष्णुमयः शिवः ।
यथान्तरं न पश्यामि तथा मे स्वस्ति चायुषि ॥

(स्कन्दोपनिषत्)

मद्भक्तः शङ्करद्वेषी मद्द्वेषी शङ्करप्रियः ।
तावुभौ नरकं यातो यावदाभूतसंप्लवम् ॥
ये भेदवादं कुर्वन्ति ते वै निरयगामिनः ।
हरिरेव हरः साक्षाद्धर एव हरिः स्मृतः ॥
इत्यविज्ञाय ये केचिन्मूढाः पण्डितमानिनः ।
तन्मायाविष्टहृदयाः कलौ भेदं प्रकुर्वते ॥

(ब्रह्माण्डपुराण०)

अयं हरिरयं शम्भुरित्यभेदं करोति यः ।
स एव कृतकृत्यः स्यात्तेनेदमखिलं जितम् ॥
एवं शिवात्मकं विष्णुं तथा विष्ण्वात्मकं शिवम् ।
समर्चयति यो भक्त्या,स याति परमं पदम् ॥

(विष्णुधर्मोत्तर)

या श्रीः सा गिरिजा प्रोक्ता यो हरिः स त्रिलोचनः ।
एवं सर्वेषु शास्त्रेषु पुराणेषु च पठ्यते ॥

(वराहपुराण०)

अहमेव भवान्शम्भो त्वमेवाहं न संशय.)
यः पश्येदावयोर्भेदमाकल्पं नरकं व्रजेत् ॥

(आग्नेयपुराण०)

मत्तो विभिन्नमात्मानं द्रष्टुं नार्हसि शङ्कर ।
योऽहं स त्वं जगच्चेदं सदेवासुरमानुषम् ॥

अविद्यामोहितात्मानः पुरुषा भिन्नदर्शिनः ।

(विष्णुपुराण॰)

To establish this oneness of Gods by dispelling possible doubts and by quoting authorities, the Hari haradvaita Bhūṣana has been composed by the sage Bodhendra Sarasvati This consists of three parts In the first, by examining the Mahopanisad, Nārayanopanisad and other Vaisnavopanisads, the author says that all these refer to the greatness of Visnu and in no way do they speak of the inferiority of other Gods In the second, by an analysis of the Śaivopanisads like Atharva Śiras and Atharva Śikha, it is shown that they refer to the greatness of Śiva and not to the inferiority of other Gods. In the third, the author profusely quotes from the Vedas, Itihasas and Purānas and proves that there is no difference between Hari and Hara The mode of discussion and the arrival at the final truth is very beautiful and interesting

The author Bodhendra Sarasvati is an ascetic and the pupil of Sri Visvādhika Yatindra He has also written four other works, Namamrtavasodya, Namamrtarasayana, Bhagavannama Bhūsana and Hari Hara Bheda Dhikkara That he was the pupil of Viśvadhika Sarasvati is known from the following extracts

विद्यावैराग्यपराक्रमभक्तिमदादिभिर्योऽधिकता प्रयन ।
विश्वाधिकाराख्यामगमच्च तेन गुरूत्तमं तं प्रणमामि मूर्ध्ना ॥

(नामामृतरसोदय)

यत्कृपालवमात्रेण मूढ सर्वज्ञतामियात् ।
श्रीमद्विश्वाधिकगुरून्वन्दे तान् करुणानिधीन् ॥

(हरिहरभेदधिक्कार॰)

यस्य नामापि सर्वस्मादुत्कर्षं ख्यापयत्यहो ।
विश्वाधिकगुरोः पादपद्मं वन्दे मुदा सदा ॥

(हरिहराद्वैतभूषणम्)

साम्बं सदाशिवं विघ्नराजं देवीं सरस्वतीम् ।
विश्वाधिकगुरुं चाहं वन्देऽभीष्टार्थसिद्धये ॥

(हरिहराद्वैतभूषणकारिका)

Though the identity of this Viśvādhika Guru cannot be established definitely, it is possible to say that he was also known by the name Gīrvāṇendra Sarasvatī. In the present work Advaita Bhūṣaṇam are found the following two verses:

गीर्वाणेन्द्रयतीन्द्राणां चरणाम्बुरुहद्वयम् ।
स्वर्गापवर्गदं पुंसां नौमि विघ्नोपशान्तये ॥
टीकातन्मूलभाष्यादीन्संयक् बोधेन्द्रसंयमी ।
आलोच्य तत्त्वं संगृह्य करोत्यद्वैतभूषणम् ॥

and in Ātmabodha Vyākhya called Bhāva Prakāśikā are found the following two verses:

अव्याजकरुणासारनिष्यन्दिनयनाञ्चलम् ।
गीर्वाणेन्द्रगुरुपार्श्वे गीर्वाणेन्द्रमहं भजे ॥(?)

*     *     *     *     *

बोधेन्द्ररचितां टीकामाचार्योक्त्यनुसारिणीम् ।
वीक्षतां दक्षिणामूर्तिराचार्यहृदयङ्गमाम् ॥

If the Bodhendra referred to in the above extracts is not different from the Bodhendra, the author of Nāmāmṛtarasodaya, etc., it can be said that Viśvādhika and Gīrvāṇendra who are referred to as Guru of Bodhendra are the names of the same person. This is not beyond doubt on account of the difference in the style of the works of the two Bodhendras. Even assuming that the identity between the two Bodhendras is established, it cannot be said definitely that Gīrvāṇendra and Viśvādhika to whom homage is paid by Bodhendra are one and the same, because Bodhendra might have studied under two preceptors at different times.

From the work Mahā Ganapati Kalpa, R No. 1517–J, a manscript deposited in the Government Oriental Manuscripts Library, we come to know that Gīrvānendra was the pupil of one Viśveśvara.

अमरेन्द्रयति शिष्यो गीर्वाणेन्द्रस्य योगिन ।
तस्य विश्वेश्वर शिष्यो गीर्वाणेन्द्रोऽग्रमस्य तु ॥

Whether the Viśveśvara referred to in this verse is the same as Viśvādhika is not possible to determine for want of better proofs If they are one and the same, then it should be assumed that Bodhendra pays homage to his preceptor Gīrvānendra in one place and to Viśveśvara, his Parama Guru, in another place

It is not quite certain whether this Bodhendra can be identified with the ascetic Bodhendra whose final remains were entombed in the village Govindapura on the banks of Kāveri; nor is it possible to identify Gīrvānendra with the preceptor of Nṛsimhāśrama and Nīlakantha Dīksita. It is clear from the following two verses that Nṛsimhāśrama and Nīlakantha Dīksita were the pupils of Gīrvan endra Sarasvatī.

कल्याणगुणसम्पूर्णं निर्वाणविभवात्मम् ।
गीर्वाणेन्द्रेश्वरवत्याश्चरण शरण भजे ॥

(अद्वैतदीपिका ४)

अर्धे तनोऽद्रिसुतामयोऽस्मीत्यहमुना किं फलमादिपूना ।
गीर्वाणयोगी द्रमुपास्महे व सर्वात्मना शैलसुतात्मको य ॥

(शिवलीलार्णव १—५)

Only further researches will make clear the doubts expressed above

Regarding the date of Bodhendra, the author of the present work, it is definite that he cannot be earlier than Appaya Dīksita as he refers both to Appaya Dīksita and Haradattacārya. He might have been a contemporary of Appaya Dīksita or he might have flourished subsequent to him

The same author has summarised his views in the form of verses and this summary is known by the name Hariharādvaita Bhūṣaṇa Kārikā. This is also printed at the end of the work. The following two manuscripts were made use of in the preparation of the press-copy of these works:

1. R. No. 35 deposited in the Government Oriental Manuscripts Library, Madras.

2. XXII-O-4 deposited in the Adyar Library, Madras. This manuscript does not contain the Hariharādvaita Bhūṣaṇa Kārikā.

I have to thank the Sanskrit Pandits of this Library Messrs. Sri V. R. *Kalyanasundaram*, N. S. *Ramanujam*, M. S. Vaidyanathan and T. H. Visvanathan who helped me in the preparation of the press-copy and collation of the two manuscripts and in the preparation of the index.

My thanks are also due to Vaidyaratna Dr. G. Srinivasamurthi, M.D. & O.M., Director of the Adyar Library, in permitting me to collate the press-copy with the manuscript of that library.

T. CHANDRASEKHARAN,
*Curator and Editor,*
*Madras Government Oriental Manuscripts Library.*

MADRAS,
11*th February* 1954.

# प्राङ्मुखम्

विद्याक्षितार्थविज्ञप्त्यै वाणीं वीणाविनोदिनीम् ।
विरिञ्चिवदनावासां वन्दे विद्याधिदेवताम् ॥

कविकुलतिलको हि भगवान्कालिदासो देवकृतब्रह्मस्तुतिव्याजेन क्वचित् ब्रह्माणं—

'नमस्त्रिमूर्तये तुभ्यं प्राक्सृष्टेः केवलात्मने ।
गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे' ॥

(कुमारसम्भवे, २-४) इति

'तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन् ।
प्रलयस्थितिसर्गाणामेकः कारणतां गतः' ॥

(कु. २-६)

इति च स्तुवन्नन्यत्र च देवकृतविष्णुस्तवनव्याजेन विष्णुं—

'नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते ।
अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधा स्थितात्मने' ॥

(रघुवंशे, १०-१६)

'रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते ।
देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः' ॥

(र. १०-१७)

('एकः कारणतस्तां तामवस्थां प्रतिपद्यसे ।
नानात्वं रागसंयोगात्स्फटिकस्येव ते ध्रुवम्' ॥)

(र. १०-८)

इति स्तुवन्नपरत्र च सप्तर्षिकृतशिवस्तुतिव्याजेन शिवं—

'या नः प्रीतिर्विरूपाक्ष त्वदनुध्यानसम्भवा ।
सा किमावेद्यते तुभ्यमन्तरात्मासि देहिनाम्' ॥

(कु. ६-२१)

'साक्षाद्दृष्टोऽसि न पुनर्विद्मस्त्वां वयमञ्जसा ।
प्रसीद कथयात्मानं न धियां पथि वर्तसे' ॥

(कु. ६-२२)

'किं येन सृजसि व्यक्तमुत येन बिभर्षि तत् ।
अथ विश्वस्य संहर्ता भाग: कतम एष ते' ॥

(कु. ६-२३)

इति स्तुवन्नद्वैतमेव तत्त्वं हरिहरब्रह्मादीनां श्रुतिस्मृतिपुराणेतिहासब्रह्मसूत्रभगवद्गीताभागवतसहस्रनामादिषु घण्टारवेणावेदितमनुसरन्निदमेव च निखिलैः श्रेयोऽर्थिभिरजस्रमनुसरणीयमादिशति इयताप्यपरितुष्यन्नेकत्र स एव ब्रवीति मन्दमतिव्यामोहापोहाय—

'एकैव मूर्तिर्बिभिदे त्रिधा सा सामान्यमेषां प्रथमावरत्वम् ।
विष्णोर्हरस्तस्य हरिः कदाचित् वेधास्तयोस्तावपि धातुराद्यौ' ॥

(कु. ६-४४) इति ।

तदेवं स्थितेऽपि करतलामलककल्पे परमार्थे व्यामोहः कश्चिदतिविचित्रोऽद्यापि दरीदृश्यतेऽवैदिकेषु बहुषु वैदिकंमन्येषु च केषुचिद्भारते देश इति महदेवेदमाश्चर्यनिदानमथ वा विषादनिदानम् ।

तद्यथा—निखिलागमार्थपरिशीलनालसमानसाः शैवंमन्या हि केचिदथर्वशिरअथर्वशिखाकैवल्याद्यासु कासुचिदुपनिषत्सु शिवपारम्यमात्रपरास्वावेदितं शिवपारम्यं परमुपलभमानाः शिव एव सर्वोत्कृष्टो न विष्णुर्नापि ब्रह्मादिरिति विवदन्तो विष्णुमवजानन्ति ।

तथैव तादृशा केचिद्वैष्णवंमन्या महानारायणनृसिंहतापिन्याद्यासु कासुचिदुपनिषत्सु विष्णुपारम्यमात्रपरास्वावेदितं विष्णुपारम्यं परमुपलभमाना विष्णुरेव सर्वोत्कृष्टो न शिवो नापि ब्रह्मादिरिति विवदन्तश्शिवमवजानन्ति । एवमन्येऽपि परिमितधिषणा केचित् स्वस्वानुमतदेवतापारम्यमात्रपरिनिश्चितबुद्धयः पण्डिता अपि पामरा इव देवतान्तरमवजानन्ति श्रुत्यादिहृदयमजानन्तोऽथ चावजानन्त इति महदेवेदमज्ञानविलसितम् ।

श्वेताश्वतर-गर्भ-ब्रह्म-मैत्रायणब्राह्मण-तैत्तिरीयकठवल्ली-नृसिंहतापिनी-स्कन्दाद्युपनिषदां बह्वीनां ब्रह्माण्डविष्णुधर्मोत्तरवराहाग्नेयविष्ण्वादिपुराणानां महाभारतहरिवंशरामायणादीनामितिहासानां भगवदीश्वरगीत्यादीनां गीतानां विष्ण्वादिसहस्रनाम्नां ब्रह्मसूत्रादीनाञ्चार्थविशेषं तात्पर्यग्राहकप्रमाणानुगृहीतमनुपश्यतामिदं हरिहरादितारतम्यदर्शनमतीवासम्यं हृदयशल्यमिति निश्चयमेतत् ।

यथायोगमत्र कानिचिद्वाक्यानि परं प्रकृतोपयोगात्प्रोदाह्रियन्ते हरिहरतारतम्यदूषकानि तद्दर्शिनामनर्थफलावेदकानि—

'शिवाय विष्णुरूपाय शिवरूपाय विष्णवे ।
शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः ॥

यथा शिवमयो विष्णुरेवं विष्णुमयश्शिव ।
यथान्तरं न पश्यामि तथा मे स्वस्तिरायुषि' ॥

(स्कन्दोपनिषत्)

'मद्भक्तः शङ्करद्वेषी मद्द्वेषी शङ्करप्रिय ।
तावुभौ नरकं यातो यावदाभूतसंप्लवम् ॥

ये भेदवादं कुर्वन्ति ते वै निरयगामिनः ।
हरिरेव हरस्साक्षाद्धर एव हरिः स्मृत ॥

इत्यविज्ञाय ये केचिन्मूढाः पण्डितमानिनः ।
तम्साधाविष्टहृदयाः कलौ भेदं प्रकुर्वते' ॥

(ब्रह्माण्डपुराण०)

'अयं हरिरयं शम्भुरित्यभेदं करोति य ।
स एव कृतकृत्यः स्यात्तेनेदमखिलं जितम् ॥

एवं शिवात्मकं विष्णुं तथा विष्ण्वात्मकं शिवम् ।
समर्चयति यो भक्त्या स याति परमं पदम्' ॥

(विष्णुधर्मोत्तर०)

'या श्रीस्सा गिरिजा प्रोक्ता यो हरिस्स त्रिलोचन ।
एव सर्वेषु शास्त्रेषु पुराणेषु च पठ्यते' ॥

(वराहपुराण०)

'अहमेव भवान् शम्भो त्वमेवाह न सशय ।
य पश्येदावयोर्भेदमाकल्प नरक व्रजेत्' ॥

(आग्नेयपुराण०)

मत्तो विभिन्नमात्मान द्रष्टु नार्हसि शङ्कर ।
योऽह स त्व जगच्चेद सदेवासुरमानुषम् ॥
अविद्यामोहितात्मान पुरुषा भिन्नदर्शिन' । (विष्णुपुराण०)

तदीदृश एवार्थस्य परमार्थस्य सम्भवदाशङ्कानिरासकेन सर्वोपनिषदितिहासपुराणाद्यर्थविमर्शनेन स्थिरीकरणाय हरिहराद्वैतभूषणनामासौ प्रवृत्तो निबन्ध इति सन्तो विदाङ्कुर्वन्तु ।

त्रिभागात्मा चाय प्रबन्ध उपलभ्यते । तत्राद्ये भागे महोपनिषन्नारायणोपनिषदादीना वैष्णवीनामुपनिषदा उपक्रमोपसहारादितात्पर्यनिर्णायकलिङ्गावष्टम्भेन हरिपारम्यरूप एवार्थस्तात्पर्यविषयो नातिरिक्त इति सुनिपुणमतिविस्तृतेन पथा विचार्य निर्धारित ।

द्वितिये च अथर्वशिखाथर्वशिरआदीना शैवीनामुपनिषदामुपक्रमोपसंहारादितात्पर्यनिर्णायकलिङ्गावष्टम्भेन हरपारम्यरूप एवार्थस्तात्पर्यविषयो नातिरिक्त इति सुनिपुणमेवातिविस्तृतेनैव च पथा विमृश्य निर्णीत ।

ततस्तृतीये भागे हरिहरयोरद्वैतमेव परमार्थ तत्त्व न द्वैत न वा तयोस्तारतम्यादीति अयमर्थस्सप्रपञ्चमनेकश्रुतीतिहासपुराणाद्यर्थविरोधाविरोधसम्भवचिन्तनपूर्वक निमृष्टो निर्धारितश्च । न केवल हरिहरयोरद्वैतभावोऽत्र समर्थितो यावता तदवताराणा सर्वेषामपि स भावस्सुनिपुण समर्थित ।

तदेवमसौ ग्रन्थकृत्कृतविचारात्मा प्रबन्धो हरिहराद्वैतस्य स्थितस्यैव भूषायमाणो निबद्ध इति निबन्धनमिद हरिहराद्वैतभूषणमाख्यायते । वैचारी चात्र रीतिरनल्पातिरमणीया च वरीवर्ति ।

कर्ता चास्य प्रबन्धस्य श्रीमद्विश्वाधिकयतीन्द्रशिष्यो नामामृतरसोदय-नामामृतरसायनभगवन्नामभूषणहरिहरभेदधिक्कारादिप्रबन्धनिर्माता श्रीमद्बोधेन्द्र-सरस्वतीचरण इति विज्ञायते । विश्वाधिकसरस्वत्यन्तेवासिता चास्य नामा-मृतरसोदयस्थेन—

'विज्ञानवैराग्यपरात्मभक्ति-
शमादिभिर्योऽधिकतां प्रपन्नः ।
विश्वाधिकाख्यामगमच्च तेन
गुरूत्तमं तं प्रणमामि मूर्ध्ना' ॥

इति पद्येन,

हरिहरभेदधिक्कारस्थितेन—

'यत्कृपालवमात्रेण मूकस्सर्वज्ञतामियात् ।
श्रीमद्विश्वाधिकगुरून्वन्दे तान् करुणानिधीन्' ॥

इति पद्येन,

प्रस्तुतप्रबन्धावस्थितेन—

'यस्य नामापि सर्वस्मादुत्कर्षं स्थापयत्यहो ।
विश्वाधिकगुरोः पादपद्मं वन्दे मुदा सदा' ॥

इति पद्येन,

हरिहराद्वैतभूषणकारिकागतेन—

'साम्बं सदाशिवं विघ्नराजं देवीं सरस्वतीम् ।
विश्वाधिकगुरुश्चाहं वन्देऽभीष्टार्थसिद्धये' ॥

इति पद्येन च सुस्पष्टं विज्ञायते । कोऽसौ विश्वाधिको गुरुः कुतत्यः इत्याद्यर्थो यद्यपि सुस्पष्टमनुपलभ्यमानो नात्र विचार्यतापदमर्हति तथापि सु विमर्शकप्रमुकायमानं यत्किञ्चिदिदमुपस्थाप्यते यद्विश्वाधिकयतिवर एवासौ कदा-चिद्गीर्वाणेन्द्रसरस्वतीनामापि स्यादिति ।

यतोऽद्वैतभूषणनाम्नि प्रबन्धे पद्यद्वितयं किञ्चिदेतादृशमुपलभ्यते—

'गीर्वाणेन्द्रयतीन्द्राणां चरणाम्बुरुहद्वयम् ।
स्वर्गापवर्गदं पुंसां नौमि विघ्नोपशान्तये' ॥

'टीकातन्मूलमाप्यदीन् सम्यक् बोधेन्द्रसंयमी ।
आलोच्य तत्त्वं सङ्गृह्य करोत्यद्वैतभूषणम्' ॥ इति ॥

आत्मबोधव्याख्यायां भावप्रकाशिकायाञ्च—

'अव्याजकरुणासारनिष्यन्दिनयनाञ्चलम् ।
गीर्वाणेन्द्रगुरूपास्यं गीर्वाणेन्द्रमहं भजे' ॥ इति ॥

* * * * *

'बोधेन्द्ररचितां टीकामाचार्योक्त्यनुसारिणीम् ।
वीक्षतां दक्षिणामूर्तिराचार्यहृदयङ्गमाम्' ॥ इति च पद्यद्वयमुपलभ्यते ।

यदि च नामामृतरसोदयादिप्रबन्धप्रणेता बोधेन्द्र एवासौ बोधेन्द्रः स्यात्तर्हि तदनुस्मृतयोर्गीर्वाणेन्द्रविश्वाधिकयोः कदाचिदभेदः स्याच्छकयं प्रतिपत्तुं गीर्वाणेन्द्रापरनामा विश्वाधिको विश्वाधिकापरनामा गीर्वाणेन्द्रो वेति । तदेव तावन्निर्धारणीयम् । ग्रन्थशैलीभेदात् ।

निर्धारितेऽपि वा बोधेन्द्रयोरैक्ये तदनुस्मृतयोर्गीर्वाणेन्द्रविश्वाधिकयोरैक्यं दुर्लभमेव प्रतिपत्तुम् । यतो द्वयोरपि गीर्वाणेन्द्रविश्वाधिकयोर्विभिन्नयोरेव बोधेन्द्रगुरुत्वाभ्युपगमे न किञ्चिदुन्मिषति बाधकं प्रमाणम् । किञ्च गीर्वाणेन्द्रगुरुर्विश्वेश्वरो विश्वाधिकश्च एको नैको वेति न शक्यते निर्धारयितुम् । यदि कदाचिदेकः स्यात्तदा बोधेन्द्र एक एव क्वचिद्गुरून् क्वचिच्च परमगुरूननुस्मरतीति शक्यमुपपादयितुम् । गीर्वाणेन्द्रगुरुता च श्रीविश्वेश्वरस्य,

'अमरेन्द्रयतिः शिष्यो गीर्वाणेन्द्रस्य योगिनः ।
तस्य विश्वेश्वरः शिष्यो गीर्वाणेन्द्रोऽग्रमस्य तु' ॥

इत्यनेन महागणपतिकल्पप्रपंचसारसंग्रहदोषयोरुपोद्घातस्थेन पद्येनावगम्यते ।

किञ्च यो हि तञ्जानगरप्रान्तदेशविराजमानकवेरकन्यासमाप्लुतगोविन्द-पुराभिधग्रामसमाधिः संस्थापितभक्तिभजनमार्गो बोधेन्द्रः स एवासौ बोधेन्द्र उतान्य इति च निर्धारणीयमेव । गीर्वाणेन्द्रोऽपि किमसौ नृसिंहाश्रमचरण-नीलकण्ठदीक्षितादीनां गुरुरेवोतान्य इति च ।

नृसिंहाश्रमचरणनीलकण्ठदीक्षितयोर्गीर्वाणेन्द्रसरस्वत्यन्तेवासिता च—

'कल्याणगुणसम्पूर्णं निर्वाणविभवालयम् ।
गीर्वाणेन्द्रसरस्वत्याश्चरणं शरणं भजे' ॥

(अद्वैतदीपिकोपोद्घात)

'अर्धे तनोरद्रिसुतामयोऽस्मीत्यहंयुना किं फलमादियूना ।
गीर्वाणयोगीन्द्रमुपासहे तं सर्वात्मना शैलसुतात्मको यः' ॥

(शिवलीलार्णव १-५ श्लोक)

इत्याभ्यामवगम्यते ।

सर्वस्याप्यस्यार्थजातस्य तत्त्वं सहृदया एव निश्चप्रचं विचार्य विदाङ्कुर्वन्त्वि-त्युदास्यत एवास्माभिः ।

तत्र तत्रैतद्ग्रन्थकर्ता श्रीमन्तोऽप्पयदीक्षिता हरदत्ताचार्यांश्चानुसरन्ति श्रीकण्ठवर्येणेति तत्समकालिकोऽसौ तदनन्तरकालिको वा बोधेन्द्रो न ततोऽपि पूर्वकालीन इति परं मुक्तकण्ठं पार्यते वक्तुमित्यलमतिविस्तृतेन ।

हरिहराद्वैतभूषणकारिका चेह संयोजिता हरिहराद्वैतभूषणस्यास्यैव सहप्रा-हिकेति न तामधिकृत्य किञ्चिद् पृथगिहावेदनीयमित्युपरम्यते ।

एतद्ग्रन्थमुद्रापणे आदर्शतयोपयुक्तौ द्वावेव कोशौ । तत्रैको मद्रपुर-राजकीयप्राच्यहस्तलिखितपुस्तकभाण्डागारस्थः पत्रात्मा सम्पूर्णः । (R. 35.)

मद्रनगरविराजमानाड्यार्कोशस्थानस्थस्ताल्पत्रात्मा सम्पूर्णोऽपर. (XXII 0-4) तत्र हरिहराद्वैतभूषणकारिकाभागो नोपलभ्यते ।

अन्ते चैतद्ग्रन्थमुद्रापणाय मुद्रणयोग्यमातृकानिर्माणपाठशोधनानुक्रमण्यादिनिर्माणकर्मकरणेन साहाय्यमाचरितवतामेतत्कोशस्थानपण्डितानां कल्याणसुन्दररामानुजवैद्यनाथविश्वनाथमहाशयाना मातृकाप्रदानेनोपकृतवतामडयार्कोशालय निर्वाहकाणाञ्चावेद्यते कृतज्ञतेति शम् ।

मद्रपुरी,
११-२-१९५४ ।

इत्थम्
ति चन्द्रशेखर

॥ श्रीरस्तु ॥

# ॥ हरिहराद्वैतभूषणम् ॥

॥ श्रीमद्बोधेन्द्रसरस्वतीकृतम् ॥

---

## प्रथमो भागः

सदानन्दात्मने सर्वसर्गस्थित्यन्तकारिणे ।
सर्वान्तर्यामिरूपाय श्रीरामायात्मने नमः ॥

श्रीशगौरीश्वराभिन्नरूपं राममहं भजे ।
सकलप्रपन्नसंत्राणे दीक्षितं सीतया श्रितम् ॥

यस्य नामापि सर्वस्मादुत्कर्षं ख्यापयत्यहो ।
विश्वाधिकगुरो पादपद्मं वन्दे मुदा सदा ॥

सर्वविघ्नहरं विघ्नराजं वन्दे सरस्वतीम् ।
सर्वशास्त्रमयीं वन्दे सर्वाभीष्टप्रदायिनीम् ॥

वेदान्तार्थाभिधानेन सर्वानुग्रहकारिणम् ।
यतिरूपधरं वन्दे शङ्करं लोकशङ्करम् ॥

हरेर्हरस्य चाद्वैतभूषणं विद्वदीप्सितम् ।
श्रीरामस्य कृपादृष्ट्या क्रियतेऽद्य मया शिवम् ॥

अत्र महाविष्णुपरमशिवयोः श्रीगौरीकान्तयोस्सर्वशक्तित्वसत्यकामत्व-सत्यसङ्कल्पत्वकरुणामृतवारिधित्वादिसकलकल्याणगुणैस्साम्यं तथा सकलजगदुदयस्थितिलयहेतुभूतमायोपहितपरब्रह्मरूपेणैक्यं तथा तत्साम्यैक्ययोर्ज्ञानं सकलश्रेयोऽर्थिनामावश्यकमित्येतच्च श्रुतीतिहासपुराणादितात्पर्यविषयभूतमेवेति प्रतिपाद्यते । तस्मिन्विष्णौ शिवे च तत्साम्यैक्ययोस्सिद्धिसाधनरूपस्य तयोस्सर्वेश्वरत्वस्योपनिषत्तात्पर्यविषयत्वं क्रमेण दर्शयिष्यते ।

/

तत्र महोपनिषदि—"अथातो महोपनिषदमेव तदाहु"रित्युपक्रम्य "एको ह वै नारायण आसी"दित्यनेन सृष्टे प्राक् नारायणस्यैकस्यैवावस्थानं "न ब्रह्मा नेशानो नापो नाग्नीषोमौ नेमे द्यावापृथिवी न नक्षत्राणि न सूर्य" इत्यनेन ब्रह्मादीनामभावश्चोक्त्वा "स एकाकी न रेमे एव तस्य ध्यानान्तस्थस्य यज्ञस्तोम उच्यते । तस्मिन्पुरुषाश्चतुर्दश जायन्ते एका कन्या, दशेन्द्रियाणि, मन एकादश, तेजो द्वादशमहङ्कारस्त्रयोदश, प्राणश्चतुर्दश आत्मा, पञ्चदशी बुद्धि, पञ्च तन्मात्राणि, पञ्चमहाभूतानि स एक पञ्चविंशतिकः पुरुष तं पुरुषं पुरुषो निवेश्य नास्य प्रजा वत्सरा दृश्यन्ते संवत्सरादेव जायन्" इति । "अथ पुनरेव नारायणस्सोऽन्य कामं मनसाध्यायत तस्य ध्यानान्तस्थस्य ललाटात्स्वेदोऽपतत्ता आप अभवन् तासु वीर्यमधासृजत् तद्धिरण्मयमण्डं समभवत् तस्माद्ब्रह्मा चतुर्मुखोऽजायत, सोऽध्यायत, पूर्वमुखाद्भूरिति व्याहृति गायत्रं छन्दो ऋग्वेदोऽग्निर्देवता, दक्षिणमुखोऽध्यायत भुवरिति व्याहृतिस्त्रैष्टुभं छन्दो यजुर्वेदो वायुर्देवता, पश्चिममुखोऽध्यायत सुवरिति व्याहृतिर्जगती छन्दस्सामानि सूर्यो देवता, उत्तरमुखोऽध्यायत भूर्भुवस्सुवरिति व्याहृतिरानुष्टुभं छन्दोऽथर्वाङ्गिरसस्सोमो देवते"ति प्रथमखण्डे । "अथ पुनरेव नारायणस्सोऽन्य कामं मनसाध्यायत तस्य ध्यानान्तस्थस्य ललाटात् त्र्यक्षश्शूलपाणि पुरुषोऽजायत बिभ्रच्छ्रियं सत्यं ब्रह्मचर्यं तपांसि च वैराग्यमैश्वर्यं च सप्रणवा व्याहृतयो ऋग्यजुस्सामाथर्वाङ्गिरसस्सर्वाणि छन्दांसि तान्यङ्गेष्वाश्रितानि तस्मादीशानो महता देवाना महादेव" इति द्वितीयखण्डे च इन्द्रियादीनां पञ्चमहाभूतादीनाञ्च नारायणादुत्पत्तिरुक्ता ।

"सहस्रशीर्षं देवं सहस्राक्षं विश्वसम्भवम्
विश्वं नारायणं देवमक्षरं परमं प्रभुम् ॥

विश्वतः परमं नित्यं विश्वं नारायणं हरिम् ।
विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति ।
विश्वभुक् विश्वसृक् सूक्ष्मं सर्वस्मादव्ययं नविम् ॥

पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम् ॥

नारायणं महाज्ञेयं विश्वात्मानं परायणम् ।
नारायणपरं ब्रह्म तत्त्वं नारायणः परः ॥

नारायणपरो ज्योतिरात्मा नारायणः परः ।
यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा ॥

अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ।
अनन्तमव्ययं कविं समुद्रेऽन्तं विश्वशम्भुवम् ॥

पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम् ।
अधो निष्ट्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति ॥

हृदयं तद्विजानीयाद्विश्वस्यायतनं महत् ।
सन्ततं शिराभिस्तु लम्बत्याकोशसंनिभम् ॥

तस्यान्ते सुषिरं सूक्ष्मं तस्मिन्सर्वं प्रतिष्ठितम् ।
तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः ।
स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्" ।

इति श्रुतिखण्डैकदेशे सहस्रशीर्षमित्यादिद्वितीयान्तं तद्विश्वमुपजीवतीत्यनेनान्वयः । विश्वशम्भवं विश्वभुगिति नारायणस्य पूर्वोक्तमेव सकलजगत्स्रष्टृत्वं पुनरनूदितम् । पतिं विश्वस्येति स्थितिकर्तृत्वं अविद्यातत्कार्याणि हरतीति हरिरित्येव हरिशब्दस्य व्युत्पत्तेः प्रसिद्धतया हरिमित्यनेन विश्वभुगित्यनेन च जगत्संहर्तृत्वञ्चोक्तम् । "सहस्रशीर्षं पुरुषं सहस्राक्ष'मित्यनेन सहस्रशीर्षेति पुरुषसूक्तोक्तं नारायणस्य रूपं दर्शितम् । विश्वतः परममिति सर्वोत्कृष्टत्वमुक्तम् । 'विश्वं नारायण'-मित्यादिनाबहुधाभ्यासेन नारायणस्य सार्वात्म्यं दर्शितम् । 'यच्च किञ्चि'-दित्यादिना सर्वव्यापकत्वमुक्तम् । 'पतिं प्रभुं पातिं विश्वस्य आत्मेश्वर'मिति-कण्ठरवेण नारायणस्य सर्वेश्वरत्वमुक्तम् । नारायणपरं ब्रह्मेत्यादिना कण्ठरवेणैव परब्रह्मत्वमुक्तम् । आत्मेश्वरमित्यनेन आत्मैव स्वयमेवेश्वरो न त्वात्मनः कश्चिदीश्वर इत्यात्मशब्देन ज्ञापितम् । नारायणपरं ब्रह्मेत्यत्र नारायणः परं ब्रह्मेत्येवार्थः न तु नारायणात्परं ब्रह्मेति । तथात्वे

पूर्वपदलक्षणाया आवश्यकत्वेन निषादस्थपत्यधिकरणविरोधापत्ते । "तत्त्व नारायण पर, आत्मा नारायण॰ पर" इत्यत्र नारायणस्यैव परतत्त्वात्मकत्वपरात्मत्वोक्त्या परब्रह्मत्वमुक्तम् । नारायणपर ब्रह्मेत्यत्र तु नारायणादन्यस्य परब्रह्मत्वमुक्तमिति पूर्वोत्तरविरोधापत्तेश्च । उपदर्शितैर्जगत्स्रष्टृत्वजगद्रक्षकत्वजगत्संहर्तृत्वजगदात्मत्वविश्वात्मत्वरूपसर्वज्ञत्वसर्वात्मकत्वमहोज्ञयत्वादिभिः सर्वेश्वरत्वलिङ्गैर्विरोधश्च । उपक्रम एव नारायणस्य जगत्कारणत्वोक्त्या सर्वेश्वरत्वमुक्तमेवेति तद्विरोधे उपक्रमाधिकरणविरोधश्च । एवञ्चास्या उपनिषदो नारायणे सर्वेश्वरतापरत्व षड्विधैस्तात्पर्यग्राहकलिङ्गैरवगम्यते ।

तथा हि अस्या उपनिषद उपक्रमे "एको ह वै नारायण आसी" दित्यादिना नारायणस्याऽऽकाशादिसर्वकारणत्वाभिधानेन सर्वेश्वरत्वमुक्तं भवति । सर्वकारणत्वस्य सर्वेश्वरत्वलिङ्गत्वात् । उपसंहारे "तस्या शिखाया मध्ये परमात्मा व्यवस्थित" इति शिखावाक्ये परमात्मेति नारायणस्य सर्वेश्वरत्व कण्ठरवेणोक्तम् । तत्रोक्तपरमात्मा नारायण एवेत्येतच्चात्रैवात प्राक् "आत्मा नारायण पर" इति कण्ठरवेण नारायणस्य परमात्मत्वाभिधानेन सिद्धमेव । अन्यथा "आत्मा नारायण पर" इत्यत्र नारायणस्य परमात्मत्व शिखावाक्ये तु न तस्य परमात्मत्वमिति पूर्वोत्तरविरोधापत्ते । अस्यामेवोपनिषदि आत्मा नारायण पर इत्यत्र परमात्मत्वेन क्लृप्तनारायणस्यैव शिखावाक्योक्तपरमात्मत्वे सम्भवति तमपहायान्यस्य कल्पस्य वा श्रुत्यन्तरे क्लृप्तस्य वात्र परमात्मत्वाभिधानकल्पनाया अन्याय्यत्वाच्च । किञ्चात्र "नारायणपर ब्रह्म" इति, "तत्त्व नारायण पर" इति, 'नारायणपरो ज्योति' इति, "आत्मा नारायण पर" इति चाभ्यासेन नारायणस्य परमात्मत्वप्रतिपादनादपि शिखावाक्योक्तपरमात्मा नारायण एवेति सिद्ध्यति । किं बहुना? एतदुपनिषदादित आरभ्य एतावत्पर्यन्त नारायणस्य परमात्मत्वाभिधानेन शिखावाक्योक्तपरमात्मापि नारायण एवेति सिद्धम् । अन्यथात्र शिखावाक्यात्प्राक् नारायणस्य बहुशः परमात्मत्व प्रतिपाद्य शिखावाक्योक्तपरमात्मत्व तस्य न सम्भवतीति कल्पने प्राक्तनबहुप्रमाणविरोधापत्ते, उपक्रमाधिकरणविरोधापत्तेश्चेति दिक् ।

तथा चात्रोपक्रमोपसंहारयोर्नारायणस्य सर्वेश्वरत्वप्रतिपादकत्वेनैकरूप्यात्मकमेकं अस्या उपनिषदो नारायणसर्वेश्वरतापरत्वे तात्पर्यग्राहकम् । तथा नारायणस्य विश्वसम्भवमिति जगत्कारणत्वं, विश्वं नारायणमिति सार्वात्म्यं, विश्वतः परममिति सर्वोत्कृष्टत्वं, हरिमिति विश्वभुगिति च सर्वहर्तृत्वमित्यादीनि सर्वेश्वरत्वलिङ्गानि । "परमं प्रभुं" इति "पतिं विश्वस्य" इति "आत्मेश्वरमिति, नारायणपरं ब्रह्म"त्यादीनि सर्वेश्वरत्वाभिधायकवाक्यानि च बहुशोऽभ्यस्तानीत्यभ्यासरूपमपरं तात्पर्यग्राहकम् । तथा नारायणनिष्ठेश्वरत्वस्य मानान्तरागम्यत्वेन सिद्धमेवापूर्वत्वरूपमन्यत्तात्पर्यग्राहकम् । तथा अस्यामेवोपनिषदि— "य इमां महोपनिषदं ब्राह्मणोऽधीते सोऽग्निपूतो भवति वायुपूतो भवति स सत्यपूतो भवति स सर्वैर्देवैर्ज्ञातो भवति तेन क्रतुरिष्टं भवति षष्टि गायत्र्याश्शतसहस्राणि जप्तानि भवन्ति प्राणायामायुतं कृतं भवति पङ्क्तिं पुनात्यासप्तमात्पुरुषं युगान्पुनातीत्याह भगवान्हिरण्यगर्भस्सोऽमृतत्वं गच्छति सोऽमृतत्वं गच्छती"ति सन्दर्भेण नारायणभजनविशेषस्य सिद्धमेव मोक्षान्तसकलपुरुषार्थावाप्त्यात्मकफलविधानरूपमपरं तात्पर्यग्राहकम् । महोपनिषत्सन्दर्भस्य सर्वस्यापि नारायणप्रतिपादकाष्टाक्षरादिजपस्यैव नारायणनामकीर्तनस्यैव चैतदुपनिषत्सन्दर्भाध्ययनस्यापि नारायणभजनरूपतायाः सिद्धत्वात् । तथा नारायणेऽत्राकाशादिसकलजगत्कारणत्वाभिधानरूपो ब्रह्मेशानकारणत्वाभिधानरूपश्चार्थवादो विस्पष्ट एवेत्यर्थवादरूपमन्यत्तात्पर्यग्राहकम् । तथा नारायणस्यात्राभिहितं सकलजगदुदयस्थितिलयहेतुत्वं तस्येश्वरत्वे उपपत्तिरूपमपरं तात्पर्यग्राहकम् । सकलजगदुदयस्थितिलयहेतुभूतस्यैव सर्वेश्वरताया उपपन्नत्वात् । तन्नारायणस्यात्र विश्वतः परमं नित्यमित्यनेनोक्तं सर्वोत्कृष्टत्वं नित्यत्वञ्च तस्येश्वरत्वे उपपत्तिः । सर्वोत्कृष्टनित्यं विनान्यस्य सर्वेश्वरत्वासम्भवात् । एवं तस्यात्र तद्विश्वमुपजीवतीति वाक्ये तद्विश्वं नारायणमुपजीवतीत्यर्थकेऽवगतं नारायणस्य सकलजगदुपजीव्यत्वं तस्य सर्वेश्वरत्वेऽप्युपपत्तिः । सर्वोपजीव्यस्यैव सर्वेश्वरताया उपपन्नत्वात् । एवमत्र यच्च किञ्चिदित्यादिनाभिहितं सर्वव्यापकत्वं तस्य सर्वेश्वरत्वे परोपपत्तिः । सर्वव्यापकस्यैव सर्वेश्वरत्वोपपत्तेः । एवमनन्तमव्ययमित्यत्रत्यानन्तशब्देनोक्तं

तस्य त्रिविधपरिच्छेदराहित्यं नारायणस्य सर्वेश्वरत्वे परोपपत्तिः । तथा समुद्रेऽन्तः विश्वशम्भुवमित्यनत्यविश्वशम्भुवमित्यनेनावगतं सर्वसुखयितृत्वं नारायणस्य सर्वेश्वरत्वे परोपपत्तिरित्येतैष्षाड्विधलिङ्गैरस्या उपनिषदो नारायणगतसर्वेश्वरत्वपरत्वं सिद्धमेव ।

नन्वस्त्वत्र तात्पर्येणोक्तमीश्वरत्वं नारायणस्य, तथापि तस्य तदीश्वरत्वं जीवत्वाविरोधेन लाक्षणिकमेव, श्रुतिषु तात्पर्येणैव जीवे जीवत्वाविरोधेन लक्षणया सर्वेश्वरत्वाभिधानस्य सुप्रसिद्धत्वादिति चेन्न । नारायणस्य सर्वेश्वरत्वनिश्चायकैतदुपनिषदपेक्षया प्रबलस्य तस्मिन् जीवत्वनिश्चायकप्रमाणस्याभावन तस्येश्वरत्वपरैतदुपनिषत्पदानां बहूनां स्वार्थपरित्यागेन बहुलक्षणाश्रयणस्यात्यन्तान्याय्यत्वात् ।

नन्वथर्वशिरसायां "ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्त" इति तस्योत्पत्यभिधानेन, तथा अथर्वशिरसि "यो वै रुद्रस्स भगवान् यश्च विष्णुस्तस्मै वै नमो नम" इति, कैवल्योपनिषदि "स एव विष्णुस्स प्राण" इति च तस्य शिवविभूतित्वाभिधानेन च सिद्धमेव तस्य जीवत्वम् । पुराणादिषु तस्य जीवत्वनिश्चायकवचनानां शतशस्सत्त्वेन तस्य जीवत्वं सिद्धमेवेति तस्येश्वरत्वाभिधायकवचनानां स्वार्थपरित्यागेन लक्षणाश्रयणं न्याय्यमेवेति चेदुच्यते । त्वदुदाहृतश्रुतिवचनेषु नारायणस्य जीवत्वबोधने षड्विधलिङ्गानामभावेन तेषामर्थवादत्वेन चात्यन्तदौर्बल्यम् । तथा एतदुपनिषद्वचनेषु नारायणस्य सर्वेश्वरत्वाभिधानेन षड्विधलिङ्गानां सत्त्वेन स्वार्थपरत्वेन तेषां प्राबल्यञ्च सिद्धमेवेति तस्येश्वरत्वपरवचनानां त्वदुदाहृतवचनैः स्वार्थबाधाङ्गीकरणेऽत्यन्तप्रबलानामत्यन्तदुर्बलैः बाधाङ्गीकारः । न चेष्टापत्तिः, दुर्बलैर्वचनैर्न्यायैश्च प्रबलानां वचनानां न्यायानाञ्च सर्वेषां बाधाङ्गीकारापत्त्या सकलतन्त्राणां समुच्छेदापत्तेः । अयुतानां वा पुराणवचनानां स्वार्थपरैतदुपनिषद्विरोधे तद्वचनानामन्यथानयनस्यावश्यकत्वात् । अन्यथा विरोधाधिकरणविरोधस्य परिहाराभावात् ।

किञ्च त्वदुदाहृतश्रुतिवचनोपबृंहकपुराणादिवचनजातापेक्षया तस्येश्वरत्वपरश्रुत्युपबृंहकपुराणादिवचनजातस्य दशगुणादधिकत्वेन एतद्वचनजातस्य

तद्वचनजातापेक्षयात्यन्तप्रबलत्वं सिद्धमेव । प्रत्युत स्वार्थपरतन्महोपनिषदनुसारेण तथा तस्य जीवत्वप्रत्यायकपुराणादिवचनजातापेक्षयात्यन्ताधिकत्वेन प्रबलस्य तात्पर्येण तस्मिन्नीश्वरत्वाभिधायकपुराणादिवचनजातस्यानुसारेण च त्वदुदाहृतानां स्वार्थतात्पर्यरहितश्रुतिवचनानां तद्वचनार्थमनुसरतां अयुतानामपि पुराणादिवचनानाञ्च स्वार्थपरित्यागेन लक्षणाश्रयणमेव युक्तम् । विष्णुपुराणादिषु नारायणस्य सर्वेश्वरत्वाभिधाने षड्विधानां तात्पर्यग्राहकलिङ्गानां सत्त्वेन तेषां सर्वेश्वरत्वेन नारायणपरत्वाप्रसिद्धत्वात् ।

ननु श्रुतिपुराणादिषु शिवस्येश्वरत्वोक्तेरनिवार्यत्वेन विष्णोरपीश्वरत्वे सर्वेश्वरनानात्वदोषापत्त्यान्यतरस्यानीश्वरताया अवश्यं वक्तव्यत्वेन उदाहृताथर्वशिरआदिवचनैर्विष्णोरनीश्वरत्वावगमेन च तस्यानीश्वरत्वमुचितमिति चेन्न । सर्वेश्वरनानात्वदोषस्य विष्णुशिवयोरुभयोरपि सकलजगदुदयस्थितिलयहेतुभूतबिम्बचैतन्यात्मकसर्वेश्वररूपेणाभेदाभिधानेनैव परिहरणीयत्वात् । अन्यथा विष्णोरनीश्वरत्वप्रत्यायकश्रुतिवचनेभ्यश्शिवस्यानीश्वरत्वप्रत्यायकश्रुतिवचनानां बहुत्वेन शिवस्यैवानीश्वरत्वापत्तेः ।

तथाहि शिवाद्विष्णोरुत्पत्तिरेकाथर्वशिरस्येवोक्ता । नारायणाच्छिवस्योत्पत्तिस्तु बह्वीषूपनिषत्सूक्ता । तत्र नारायणोपनिषद्द्वये "नारायणाद्रुद्रोऽजायत" इति । सुबालोपनिषदि "ललाटात्क्रोधजो रुद्रोऽजायत" इति चोत्पत्तिरुक्ता । अस्यां महोपनिषदि तु "न ब्रह्मा नेशानः" इति जगत्सृष्टेः प्राक् शिवस्याविद्यमानत्वमुक्त्वा तत्सृष्ट्यनन्तरं तस्योत्पत्तिरुक्ता - "ललाटात् त्र्यक्षश्शूलपाणिः पुरुषोऽजायत" इति । एवं शिवस्य बहुधोत्पत्त्यभिधानेन, सृष्टेः प्रागविद्यमानत्वाभिधानेन, तथा नारायणोपनिषद्द्वये "ब्रह्मा नारायणश्शिवश्च नारायणः" इति, तैत्तरीयोपनिषदि "स ब्रह्मा स शिवस्सेन्द्रः" इति, नृसिंहतापिन्यां "स ब्रह्मा स शिवस्स हरिस्सेन्द्रः" इत्यादिबहुवचनेषु च शिवस्य नारायणविभूतित्वाभिधानेन, तथा मैत्रायणोपनिषदि "अथ यो ह खलु वा वास्य तामसोऽशोऽसौ स योऽयं रुद्रः" इति शिवस्य तामसत्वाभिधानेन तथा सुबालोपनिषदि नारायणस्य सर्वान्तर्यामित्वाभिधायिसन्दर्भे "यो रुद्रो यो नाड्यां यः प्राणे यो विज्ञाने य

आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्चरति सोऽयमात्मा, तमात्मानमुपासीताजरममृतमभयमशोकमनन्त" मित्यत्र रुद्रशब्दोक्तशिवस्यानन्तशब्दोक्तनारायणनियम्यत्वाभिधानेन, तथा बृहदारण्यके "यान्येतानि देवत्रा क्षत्राणि इन्द्रो वरुणस्सोमो रुद्र" इति रुद्रशब्दोक्तशिवस्य क्षत्रियत्वाभिधानेन, तथा तैत्तिरीये "रुद्रो वै क्रूर" इति तस्य क्रूरत्वाभिधानेन, तत्रैव "सोऽब्रवीद्वरं वृणा अहमेव पशूनामधिपतिरसानीति तस्माद्रुद्रः पशूनामधिपति" रिति शिवस्य वरलब्धाजन्तुकाधिपतित्वाभिधानेन च, पुराणादिष्वेतच्छ्रुतिवचनोपबृंहकाणां शिवस्यानीश्वरत्वप्रत्यायकवचनानामुपलभ्यमानत्वेन च शिवस्य जीवत्वापत्तिर्विस्पष्टैव ।

नन्वथर्वशिरसायां "ब्रह्माविष्णुरुद्रेन्द्रास्ते संप्रसूयन्त" इत्यत्र शिवस्य ब्रह्मादिभ्यस्तुरीयत्वावगमेन तुरीयशिवस्य सर्वेश्वरत्वं मूर्तित्रयान्तर्गतशिवस्यानीश्वरत्वमिति व्यवस्थासम्भवेन, एवं विष्णुद्वयाभावेन तद्विषये एवं व्यवस्थाया असम्भवेन वैकस्यैवानीश्वरत्वमपि वक्तव्यमिति तस्यानीश्वरत्वमेवोचितमिति चेत् ।

उच्यते । सुबालोपनिषदि नारायणस्य सर्वान्तर्यामित्वाभिधायकसन्दर्भे "यो ब्रह्माणि यो नाभ्या" मित्यादौ, "यो विष्णौ यो नाभ्या" मित्यादौ, "यो रुद्रे यो नाभ्या" मित्यादौ च एतद्वाक्यत्रयान्तेषु श्रूयमाणानन्तपदैरभिहितस्य सर्वान्तर्यामिरूपनारायणस्य ब्रह्माविष्णुरुद्रान्तर्यामित्वाभिधानेन सिद्धमेव तेभ्यस्तस्य तुरीयत्वम् । नृसिंहपूर्वतापिन्यां पञ्चमोपनिषदि श्रीनृसिंहरूपनारायणस्योपासनास्थानरूपं महाचक्रमुक्ताभिहितम्—"तस्य मध्ये नाभ्यां तारकं भवति । यदक्षरं नारसिंहमेकाक्षरं तद्भवती"ति । अस्य वचनस्येदं भगवत्पादीयं भाष्यम्—"तस्य मध्ये महाचक्रस्य मध्ये मध्यवर्तिनाभ्यां वेष्टनरूपा हि नाभयः भूमध्याः, ता व्यावर्तयितुं मध्ये नाभ्यामित्युक्तम । तारकं भवति संसारतारकत्वात्तारकं प्रणवाक्षरं भवति । यदक्षरं नारसिंहमेकाक्षरं तद्भवतीत्यक्षरं, जगदितं वा एतद्रूपं अक्षरमिति नृसिंहपदव्याख्यानावसरे व्याख्यातम् । तदक्षरशब्दात्प्रत्यभिज्ञायते । तथा नारसिंहमिति तद्धितात्सामप्रत्युपास्यं सर्वं प्रतीयते । ततस्सर्वस्मिन्नुपास्ये

प्रतीते एकमेवोपास्यं मूलनृसिंहव्यूहाख्यं वक्तुं विशिनष्टि—एकाक्षरं तद्भवतीति । यदक्षरं नारसिंहमुपास्यमित्यनूद्य तदेकं भवतीत्यक्षरश्चेति महाचक्रमध्यनाभिवर्तित्वेन क्षीरोदार्णवसम्बन्धितया उपासनं विधीयत इत्यर्थः" इति ।

तदनन्तरं तस्यामेवोपनिषद्युक्तम्—"तस्य पुरस्ताद्वसव आसते रुद्रा दक्षिणतः आदित्याः पश्चात् विश्वेदेवा उत्तरतः ब्रह्मविष्णुमहेश्वरा नाभ्यां सूर्याचन्द्रमसौ पार्श्वयो" रिति । अस्य वचनस्येदं भगवत्पादीयं भाष्यम्—"तस्येति तच्छब्दान्नाभिस्थे विष्णुर्मूलनृसिंहव्यूहः परामृश्यते । तत्परिवारकान्देवानाह । पुरस्ताद्वसवः परिचारका आसते । रुद्रा दक्षिणतः आदित्याः पश्चाद्विश्वेदेवा उत्तरतः ब्रह्मविष्णुमहेश्वरा नाभ्यामिति । एवं दिङ्नाभिपरिवारकानुक्त्वेदानीं पार्श्वपरिवारकावाह-सूर्याचन्द्रमसौ पार्श्वयोः कुक्षिप्रान्तप्रदेशयोरिति यावदि" ति । अत्र "तस्य पुरस्ताद्वसव आसत" इत्यादिश्रुत्या तद्भाष्येण च महाचक्रनाभिमध्यचक्रवर्तिप्रणवस्थक्षीरोदार्णवशायिमूलनृसिंहरूपनारायणस्य ब्रह्मविष्णुमहेश्वरपरिवारकत्वाभिधानेन सिद्धमेव तस्य ब्रह्मविष्णुमहेश्वरेभ्यस्तुरीयत्वम् । श्रीमूर्तिरूपनारायणावतारस्य श्रीनृसिंहस्य तुरीयत्वे तन्नारायणस्य तुरीयत्वं कैमुतिकन्यायसिद्धमेव । श्रीनृसिंहस्य तन्नारायणावतारत्वञ्च तस्यामेव नृसिंहपूर्वतापिन्या प्रथमोपनिषदि तृतीयखण्डादौ "क्षीरोदार्णवशायिने नृकेसरिं योगिध्येय"मिति वाक्योक्तेन श्रीनृसिंहस्य क्षीरोदार्णवशायित्वरूपविष्णुत्वलिङ्गेनानुपपत्त्याविरोधिना सिद्धमेव ।

विष्णुपुराणे—

> ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः ।
> विभूतयो हरेरेता जगतस्सृष्टिहेतवः ॥
>
> विष्णुर्मन्वादयः कालस्सर्वभूतानि च द्विज ।
> स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः ॥
>
> रुद्रः कालान्तकाद्याश्च समस्ताश्चैव जन्तवः ।
> चतुर्धा प्रलयायैता जनार्दनविभूतयः ॥ इति ॥

नारदीयपुराणे—

नारा णोऽक्षरोऽनन्तस्सर्वव्यापी निरञ्जन ।
तेनेदमखिल जात जगत्स्थावरजङ्गमम् ॥

आदिसर्गे महाविष्णु स्वप्रकाशो जगन्मय ।
गुणभेदमधिष्ठाय मूर्तित्रित्वमवाप्तवान् ॥

सृष्ट्यर्थमसृजद्देवो दक्षिणाङ्गात्प्रजापतिम् ।
मध्यतो रुद्रमीशान जगदन्तकर मुने ॥

पालनायास्य जगतो वामाङ्गाद्विष्णुमव्ययम् ।

इति च श्रीमूर्तिरूपनारायणस्य तुरीयत्वं स्फुट दर्शितम् । अतस्तुरीयविष्णोस्सर्वेश्वरत्व मूर्तित्रयान्तर्गतविष्णोरनीश्वरत्वमिति व्यवस्थात्रापि वक्तु शक्यचैवेति नोक्तदोषावकाश ।

किञ्च श्रुतिषु क्वापि श्रीमूर्तिरूपशिवस्य तुरीयत्वाभिधानेन ईश्वरत्वानीश्वरत्वे एकस्यैवेत्येतदवश्यमङ्गीकर्तव्यत्वेनानिच्छतोऽपि तवापतितमेवेति त्वत्पक्षेऽनीश्वरताश्रयस्येश्वरत्वासम्भवेन नृसिंहतापिन्या तुरीयत्वेनोपदर्शितस्य श्रीमूर्तिरूपनारायणस्यानीश्वरत्वाभावेन तस्यैव सर्वेश्वरत्व मूर्तित्रयान्तर्गतविष्णोशिवस्य चानीश्वरत्वमेवेत्येतदवश्य वक्तव्यत्वेन व्यवस्थावादिनस्तव वृद्धिमिच्छतो मूल नष्टमिति न्यायेनापतितम् ।

न चाथर्वशिखायामथर्वशीर्षे कैवल्योपनिषदि च श्रीमूर्तिरूपशिवस्य तुरीयत्वमुक्तमिति भ्रान्तेरवकाश । अथर्वशिखायाम्—"सर्वमिद ब्रह्म विष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते सर्वाणि चेन्द्रियाणि सहभूतै"रिति सन्दर्भे शिवस्य सर्वकारणत्वाभिधानेन श्रीमूर्तिरूपे आकाशादिसर्वकारणत्वासम्भवस्याग्रे वक्ष्यमाणत्वेन ब्रह्मविष्णुरुद्रादिसकलजगत्कारणत्व बिम्बचैतन्यरूपशिवस्यैवेति श्रीमूर्तिरूपशिवस्य तुरीयत्वप्रसक्तेरेवाभावात् । एव अथर्वशिरसि शिवस्य सार्वात्म्यत्वाभिधानस्थले "यश्च ब्रह्मा यश्च विष्णुर्यश्च महेश्वर". इत्यनेन दर्शितमेतत्त्रिम्यस्तुरीयत्वम् । तत्त्रयाणा तदितरसर्वेष्य च कारणी

मूर्तविग्रहचैतन्यरूपशिवस्यैव न मूर्तिरूपस्य सर्वकारणस्यैव सार्वात्म्यमिति सिद्धत्वेन श्रीमूर्तिरूपस्य सर्वकारणत्वाभावेन तस्य तत्रोक्तसर्वात्मत्वासम्भवात्।

न च तस्य सार्वात्म्यपरसन्दर्भे आदौ पठितब्रह्मविष्णुमहेश्वरात्मकत्वं श्रीमूर्तिरूपस्य तदितरसर्वात्मकत्वं बिम्बचैतन्यरूपस्येति किं न स्यादिति वाच्यम्। अर्धजरतीयन्यायापत्तेः। तत्सन्दर्भस्य सर्वस्यैकस्मिन्सार्वात्म्यपरत्वे सम्भवत्युभयोस्सार्वात्म्यपरताया अन्याय्यत्वाच्च।

किञ्च तत्र प्रथमखण्डे "सोऽन्तरादन्तरं प्राविश" दित्यादिना शिवस्य सर्वान्तर्यामिरूपमुक्त्वा "सोऽहं नित्यानित्यः स अन्तर्यामिरूप अहं नित्यानित्य" इत्यादिना अन्तर्यामिरूपस्यैव तस्य सार्वात्म्यं देवान्प्रत्युपदिश्यान्तर्हितो भवतीति सिद्धत्वेन द्वितीयतृतीयखण्डयोर्देवैस्तदुक्तसर्वात्मभावेन कृतस्तुतिसन्दर्भेऽवगतसार्वात्म्यमपि सर्वान्तर्यामिरूपशिवस्यैवेति सिद्धमेव। शिवेनान्तर्यामिरूपस्यैव सार्वात्म्ये उपदिष्टे ततश्शिक्षितैर्देवैः श्रीमूर्तिरूपस्यान्तर्यामिरूपस्य च सार्वात्म्याभिधानासम्भवात्। एवं कैवल्योपनिषदि शिवस्य सार्वात्म्याभिधायकसन्दर्भे "स ब्रह्मा स शिव"इत्यादिना दर्शिततुरीयत्वमपि बिम्बचैतन्यरूपशिवस्यैव न मूर्तिरूपस्य। तत्रोक्तसार्वात्म्यस्यापि श्रीमूर्तिरूपेऽसम्भवात्। ब्रह्मशिवविष्ण्वात्मत्वं श्रीमूर्तिरूपस्य तदितरसर्वात्मत्वं बिम्बचैतन्यरूपस्येत्यत्रापि अर्धजरतीन्यायस्य उभयगतसार्वात्म्यस्य चानिवार्यत्वात्। किञ्च स शिवस्सेन्द्र इत्यत्रावगतेन्द्रात्मकतायास्तत्रैवावगतप्राणकालाग्न्याद्यात्मकतायाश्च श्रीमूर्तिरूपस्यासम्भवेन तदात्मकताया बिम्बचैतन्यरूपस्यैव वक्तव्यत्वेन च मूर्तिरूपस्य तन्मध्यगतविष्ण्वात्मत्वाभिधाने सन्दंशन्यायविरोधात्। "ज्ञात्वा तं मृत्युमत्येती"त्यत्र तमिति तच्छब्देन प्राक्तनसन्दर्भे सर्वात्मकत्वेनोक्तं ब्रह्म परामृश्य तस्य मुक्तिसाधनीभूतज्ञानविषयत्वमभिहितं न मूर्तिरूपस्य तस्य तद्विषयत्वासम्भवादिति दिक्। पुराणादिषु शिवस्य तुरीयत्वेऽभिहितेऽपि श्रुतेः प्रबलत्वेन तुरीयत्वेन श्रुत्युक्तविष्णोरेव सर्वोत्कृष्टत्वं सर्वेश्वरत्वञ्च न शिवस्येति त्वत्पक्षे वक्तव्यत्वात्।

वस्तुतस्तु विष्णुशिवयोरुभयोरपि श्रुतिपुराणादिषु तात्पर्येणैव सर्वेश्वरत्वाभिधानं समानमेव। विष्णोस्सर्वेश्वरत्वदृढीकरणाय शिवस्य बहुप्रकारैरनीश्वरत्वप्रत्यायनेन शिवनिन्दकानि बहून्यर्थवादवचनानि विष्णूपासने

रुच्युत्पादनाय शिवोपासनादिष्वसाधनत्वादिप्रत्यायनेन तन्निन्दकानि बहून्यर्थवादवचनानि च । तथा शिवस्य सर्वेश्वरत्वदृढीकरणाय विष्णोर्बहुप्रकारैरनीश्वरत्वप्रत्यायनेन विष्णुनिन्दकानि बहून्यर्थवादवचनानि शिवोपासने रुच्युत्पादनाय विष्णूपासनादिष्वसाधनत्वादिप्रत्यायनेन तन्निन्दकानि बहून्यर्थवादवचनानि च श्रुतीतिहासपुराणादिषु सन्त्येवेत्येतदपि समानमेव । तथा चोभयोरुक्तसर्वेश्वरत्वनिर्वाहाय बिम्बचैतन्यात्मकसर्वेश्वररूपेण तयोरैक्यं सर्वैः श्रेयोऽर्थिभिरवश्यमभ्युपगन्तव्यम् । तथा तदर्थवादवचनैरवगमितस्य लोकानां यत्किंचित्प्रयोजनसिद्ध्यै स्वेच्छयाङ्गीकृतस्य उत्पन्नत्वोपासकत्वताडचत्वभेद्यत्वाद्यनीश्वरत्वस्य निर्वाहाय तयोर्नटस्येव केवलाभिनयरूपमनीश्वरत्वमपि श्रेयोऽर्थिभिरवश्यमभ्युपगन्तव्यमेवेति सिद्धमेवेयं महोपनिषत् नारायणस्य मुख्यया वृत्त्या सर्वेश्वरत्वपरेवेति । यदत्र शिवतत्वविवेकेऽभिहितम्—

> "समुत्पन्नस्त्वत्तः प्रथममसहायस्तत इमं
> जगत्संहर्तारं पुरुषमरविन्दासनमपि ।
> पुरास्त्राक्षीछ्लक्ष्मीपतिरिति महत्योपनिषदा
> यदुक्तं तत्तादृक् त्वयि न भजते पर्यवसितिम्" ॥

"एको ह वै नारायण आसीदि" त्येतत् आसीदित्यस्य सद्भावार्थकत्वेन प्रसिद्धत्वेऽपि "लोहितो रोहितादासीत् सिन्धुरतस्य सुतोऽभवत् ।" इत्यादावुत्पत्त्यर्थकताया अपि दृष्टत्वेन महासर्गकाले नारायणस्य परमशिवादुत्पत्तिप्रतिपादकं सत् परमशिवस्यैव जगत्कारणत्वे पर्यवस्यति । शिवस्य जगत्कारणत्वप्रतिपादकश्रुत्यन्तरानुरोधादिति । तन्न । अस्यामेव श्रुतौ नारायणस्याकाशादिसकलजगदुदयस्थितिलयहेतुत्वाभिधानेन तस्येश्वरत्वेनैव सिद्धतया तस्योत्पत्त्यभिधाने ईश्वरानादित्वसिद्धान्तभङ्गापत्तेः । उत्पत्त्यसम्भवादित्यधिकरणविरोधापत्तेश्च । तदधिकरणे "विज्ञानादिभावे वा तदप्रतिषेधः" इति गुणसूत्रे तद्भाष्ये च वासुदेवादीश्वरात् श्रीमूर्तिरूपाणां सतामपि सङ्कर्षणप्रद्युम्नानिरुद्धानामीश्वराणामुत्पत्त्यसम्भवस्योक्तत्वात् । किञ्च शिवाद्विष्णोरुत्पत्तिं कल्पयद्भिः शिवाद्दौर्बल्यं तदधीनत्वञ्च विष्णोर्वक्तव्यम् ।

अन्यथा तस्योत्पत्तिकल्पनायाः प्रयोजनाभावात् । शिवाधीनत्वञ्च विष्णोर्न सम्भवत्येव । तस्य शिवाधीनत्वे सुखं, शिवाधीनत्वाभावे दुःखञ्च भवतीति यत्नव्यन्वापत्तेः । न चेष्टापत्तिः । विष्णोस्सुकृतदुष्कृतकल्पनापत्तेः । तदुभयनिरपेक्षतया परमेश्वररूपशिवेन विष्णवे सुखदुःखदानासम्भवात् । तदसम्भवाङ्गीकारे "वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति" इत्यधिकरणविरोधापत्तेः । तदधिकरणे तत्सापेक्षत्वेनैव परमेश्वरस्य सुखदुःखदातृत्ववर्णनात् । विष्णोस्सुकृतदुष्कृताङ्गीकारे तस्याविद्यावरणाङ्गीकारापत्तेः ।

न च तद्विना तस्य तदुभयोरङ्गीकारः । "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" इत्यधिकरणविरोधापत्तेः । तदधिकरणे ज्ञानेनाज्ञाननाशानन्तरं कर्माश्लेषस्योक्तत्वात् । अज्ञानावरणबन्धयोरङ्गीकारे तस्य जीवत्वापत्तेः । अपि च शिवाद्विष्णोर्दौर्बल्यञ्च न सम्भवति । विष्णुशिवयोरुभयोरीश्वरत्वेनानावृतज्ञानरूपत्वापरिमितशक्तिकत्वयोरविशेषात् । दौर्बल्यस्यापरिमितशक्त्यस्फुरणहेतुकत्वात् । न हि यथा जीवानामपरिमितशक्तिसद्भावे तदस्फुरणाद्दौर्बल्यं तथेश्वरयोरेतयोस्सम्भवति । जीवानामिवैतयोरविद्यावरणाभावेन तदस्फुरणासिद्धेः । न च विष्णोरविद्यावरणं सम्भवति, उक्तजीवत्वापत्तेः । ईश्वरस्याविद्यावरणराहित्यमचिन्त्याद्भुतशक्तिमत्त्वं तयोः स्वाभाविकत्वञ्च दर्शितमीक्षत्यधिकरणभाष्ये । अविद्यावतस्संसारिणः शरीराद्यपेक्षज्ञानोत्पत्तिः स्यात् । न ज्ञानप्रतिबन्धकारणरहितस्येश्वरस्य । मन्त्रौ चैनावीश्वरस्य शरीराद्यनपेक्षतामनावरणज्ञानवत्ताञ्च दर्शयतः ।

"न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" ॥ इति ॥

"अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्" ॥ इति च ॥

एवमयमर्थो भाष्य एव बहुस्थलेषु दर्शितः । जीवानामपि स्वाभाविकमपरिमितशक्तित्वमविद्यावरणादस्फुरणञ्चेत्येतदपि प्रतिपादितम्—"परामिध्यानात्तु तिरोहितम्, ततो ह्यस्य बन्धविपर्ययौ" नित्याधिकरणे । तत्र हि सिद्धान्तभाष्ये "विद्यमानमपि तत्तिरोहितमविद्यादिव्यवधाना" दित्यनेन जीवे ज्ञानैश्वर्यादिरूपस्येश्वरसमानधर्मसत्त्वस्य स्वभावतो विद्यमानत्वमविद्यादितिरस्कृतत्वञ्चाभिहितम् । तदेव प्रपञ्चितं "देहयोगाद्वा सोऽपि" इत्युत्तरसूत्रविषये भाष्ये । "कस्मात्पुनर्जीवः परमात्मांश एव सन् तिरस्कृतज्ञानैश्वर्यो भवति । युक्तं तु ज्ञानैश्वर्ययोरतिरस्कृतत्वं विस्फुलिङ्गस्येव दहनप्रकाशनयोरिति । उच्यते । सत्यमेवैतत् । सोऽपि तु जीवस्य ज्ञानैश्वर्यतिरोभावो देहयोगात् देहेन्द्रियमनोबुद्धिविषयवेदनादियोगाद्भवति । अस्ति चात्रोपमा यथाग्नेर्दहनप्रकाशनसम्पन्नस्याप्यरणिगतस्य दहनप्रकाशने तिरोहिते भवतो, यथा वा भस्मच्छन्नस्य, एवमविद्याप्रत्युपस्थापितनामरूपकृतदेहाद्युपाधियोगात्तदविवेकभ्रमकृतो जीवस्य ज्ञानैश्वर्यतिरोभाव" इति सन्दर्भेण । अत्र भाष्ये जीवस्य ज्ञानैश्वर्यादिनेश्वरसाम्याभिधानेन ईश्वरांशेनैव सिद्धस्य विष्णोर्ज्ञानबलैश्वर्यादिनेश्वरसमानतया कैमुतिकन्यायसिद्धत्वेन शिवात्तस्य दौर्बल्यकल्पनमत्यन्तासङ्गतमेव । किञ्च विष्णोरविद्यावरणाङ्गीकारपक्षे तत्पश्चादनन्तरं विष्णोस्तदावरणमथवानादिसिद्धम् ? आद्यपक्षे सर्गाद्यसमये विष्णोरावारकाविद्या तदैवोत्पन्ना ? अथ वानादिसिद्धा ? नाद्यः अविद्या सर्गादावुत्पन्ना सती विष्णुमावृणोतीत्यङ्गीकारेऽविद्यानादित्वसिद्धान्तस्य अविद्याचैतन्यसम्बन्धानादित्वसिद्धान्तस्य च विरोधापत्तेः । किञ्च विष्णोरीश्वरतया नित्यमुक्तत्वेन अविद्यावरणस्य बन्धनत्वेन च नित्यमुक्तस्य विष्णोरविद्यावरणरूपबन्धाङ्गीकारे मुक्तेरनित्यत्वापत्तेः, नित्यमुक्तस्य मुक्तेरनित्यत्वे इदानीं मुक्तानां मुक्तेरनित्यतया कैमुतिकन्यायसिद्धत्वेन सर्वेषां मुक्त्यर्थप्रयासवैफल्यापत्तेः, मुक्तेर्नित्यत्वाभिधायकश्रुतिपुराणादिवचनविरोधापत्तेश्च । न द्वितीयः— अनादिसिद्धाविद्याया कल्पादौ विष्ण्वावारकत्वे अविद्याचैतन्यसम्बन्धानादित्वसिद्धान्तविरोधस्य मुक्तेरनित्यत्वादिदोषाणाञ्च समानत्वात् । नापि द्वितीयः विष्णोरविद्यावरणस्यानादित्वे तस्याक्तनित्यमुक्ततायाः असाङ्गत्यापत्तेः । अजरममृतमभयमशोकमनन्तमित्यप्राविशन्निवार सुबालोपनिषद्यन्यत्र च

तस्यामृतत्वाभिधानात् । अपि च यथा देवदत्तपुत्रो युवा दृढाङ्ग-कश्चिन्नटः स्थूलप्रतिमोदरे स्थितस्तत उत्पन्नोऽस्मीति निर्गच्छति तस्मिन्नभिनयरूपोत्पत्तिमति नटेऽभिनयरूपा सोत्पत्तिः कस्यचित् शैशवधर्मस्य वा यत्किञ्चिद्दौर्बल्यस्य वा यत्किञ्चिदज्ञानस्य वा प्रतिमापुत्र एवायं न देवदत्तपुत्र इति व्यवहारस्य वा कस्यचिद्विशेषस्य हेतुर्न भवत्येव तदुत्पत्तेरभिनयनरूपत्वादेव । तथात्र नारायणस्य भवत्कल्पितोत्पत्तिरभिनयरूपा वा कर्माधीना वा । नाद्यः—विष्णोरभिनयरूपोत्पत्तिं कल्पयितुं प्रयोजनगन्धस्याप्यभावेन तत्कल्पनस्योन्मत्तप्रलापसिद्धेः । तस्याभिनयरूपोत्पत्तेः "अजायमानो बहुधा विजायते" इत्यादिश्रुत्या ।

"अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया" ॥

इत्यादिभगवद्गीतासन्दर्भेण भगवत्पादकृतभाष्येण च सिद्धतया तदुत्पत्तेरीश्वरत्वाविरोधित्वेनेष्टापत्तेश्च । न द्वितीयः विष्णोस्तदुत्पत्तिसाधनीभूतकर्मसिद्धये तस्याविद्यावरणकल्पनापत्त्या उक्तदोषस्यैवापत्तेः । न चेष्टापत्तिः । नारायणस्य तात्पर्येणैव सर्वेश्वरत्वाभिधायकैतदुपनिषदि जागरूकायां तस्मिन् जीवत्वगन्धोऽपि न सम्भवतीत्यस्यानुपदं दर्शितत्वात् ।

न च विष्णावुक्तेश्वरतायाश्शिवे पर्यवसानेन तस्य जीवत्वं निष्प्रत्यूहं सिद्ध्यतीति वाच्यम् । तत्सिद्धेरन्योन्याश्रयेण निरस्तत्वात् । तस्मिन्नुक्तेश्वरतायाः शिवे पर्यवसानसिद्धौ तस्मिन् जीवत्वसिद्धिः, तस्य जीवत्वसिद्धौ तस्मिन्नुक्तसर्वेश्वरतायाश्शिवे पर्यवसानसिद्धिरिति नारायणस्य सर्वेश्वरत्वपरैतदुपनिषदादिवचनानां एतदुपबृंहकपुराणादिवचनानां च बहुत्वेन पद्विपालकैः स्वार्थपरत्वेन च तस्यानीश्वरत्वप्रत्यायकश्रुतिपुराणादिवचनापेक्षयात्यन्तप्राबल्यस्यानुपदं दर्शितत्वाच्च ।

किञ्च एतन्नारायणजनकश्शिव इति कल्पनाङ्गीकारेऽपि शिवनारायणयोर्भेदपक्षे नारायणेन निर्मितसकलजगत्प्रति शिवः कारणमिति कल्पनमसङ्गतमेव । देवदत्तेन जनितशिशुं प्रति देवदत्तजनको यज्ञदत्तः कारणमिति, कुलालेन निर्मितघटादिकार्यं प्रति कुलालजनकत्वेन कुलालजनकः कारणमिति चात्यन्तपरिहसनीयस्य न्यायसाम्येन कल्पनापत्तेः ।

यद्यपि सङ्गतमसङ्गतं वा शिवनिन्दकानामनिष्टं वक्तव्यमिति शिवभक्ताग्रगण्यैः दीक्षितैरिदमसङ्गतमिति ज्ञात्वैवोक्तम् । तदुचितमेव । तथापीदानीतना सुदुर्मगा दैवेन निर्दग्धास्सकलशास्त्रपाठयितारोऽपि केचनात्यन्तासङ्गतमपि तमर्थं दीक्षिता वेदार्थं निर्णीयोक्तवन्तस्तेषां सिद्धान्त एवायमर्थ इति गृह्णन्तश्शिवमाश्रित्य विष्णुं निन्दन्तश्शिवभक्तिफलमप्यप्राप्य नरकं गच्छन्तीतीदमत्यद्भुतं भाति ।

वस्तुतस्तु इदमपि नाद्भुतम् । जगदीश्वरमायया मोहितानां स्वाभाविकत्वात् ।

"त्वन्मायया कमलनाभ विमोहितश्चेत्
विद्यावतो जडमतेरपि को विशेषः ।
गाढान्धकारकवलीकृतलोचनानां
मुन्मीलनेन किमुतापि निमीलनेन" ॥ इति वचनात्

ननु वामदेवादीनां जीवानामभिहितं सार्वात्म्यसर्वकारणत्वादिकं परमात्मनि पर्यवसितमिति सुप्रसिद्धत्वेन नारायणस्योत्पत्तिकल्पनेन जीवत्वसिद्धिसम्भवेन च तस्योक्तं जगत्कारणत्वं परमात्मनि शिवे पर्यवस्यतीत्यभिप्रायेण दीक्षितैरुक्तमिति वक्तुं शक्यत्वेन कथमिदानीन्तनानां केषाञ्चिद्भ्रान्तिकल्पनमिति चेन्न । सर्वेश्वरस्य सत एव नारायणस्याभिनयरूपोत्पत्तिस्सर्वेषु युगेष्वस्तीत्यभिप्रायकेन "अजोऽपि सन्नव्ययात्मे"त्यादिभगवद्गीतासन्दर्भेण तद्भाष्येण तस्मिन् षड्विधलिङ्गैस्सर्वेश्वरत्वपरैरुपनिषदादिभिः पुराणादिभिश्च तस्येश्वरत्वसिद्ध्या जीवत्वं न सम्भवतीत्यनुपदं दर्शितत्वेन तस्योत्पत्तिकल्पने जीवत्वं सिद्ध्यतीति भ्रान्त्या तैः कल्पितमित्यापत्तेः । तेषां सर्वज्ञकल्पानां सर्वानुग्रहमाजां भ्रान्तिकल्पनापेक्षयेदानीन्तनानां विष्णुनिन्दकानामेव तत्कल्पनस्योचितत्वात् ।

ननु शिवावतारेऽभिहितं शिवेऽभिहितमेवेति सिद्धत्वेन नारायणस्य शिवादुत्पत्त्यभिधानेन तदवतारत्वसिद्ध्या तस्योक्तं जगत्कारणत्वादिकं शिवस्यैवोक्तं भवति । अत एव कण्ठरवेणोक्तं तत्रैव शिवतत्त्वविवेके—

"तवैश्वर्यं चक्रिण्यपि तदवतारेष्वपि परं
तदंशत्वेनैक्यात् परमुपदिशन्ति श्रुतिगिरः ।
अमूपायेनावन्मुनिभिरुदितं मर्म भगव-
त्त्वबुद्ध्येके मौढ्याद् भ्रमतमसि मज्जन्ति विविधे" ॥

अयं भावः—

"यथा विष्णुर्गिरीशश्च श्रीशम्भोरखिले परात् ।
न भिद्यन्ते तदंशत्वादवतारो हरेरिव ॥

एवं सात्यवतारस्य कृष्णादेः कीर्तिते यथा ।
तदीयत्वेन कीर्त्यन्ते महाविष्णोर्गुणा अपि ॥

एवं शिवस्य कीर्त्यन्ते तदंशेष्वेकताधिया ।
सर्वकर्तृत्वसर्वान्तर्यामित्वप्रमुखा गुणाः ॥

सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥

इत्यादयो हि गीतादौ पठिता विष्णुसूक्तयः ।
तस्मिंस्तेनैव रूपेण न युज्यन्ते कथञ्चन ॥

तस्मात्तस्य जगन्मूलमूर्तेरेकत्वधियैव हि ।
इमास्सूक्तय इत्येव स्वीकर्तव्यं परैरपि ॥

तथा च प्रबलैर्मानैर्जगन्मूले विनिश्चिते ।
शाम्भवे रूप एतासां भावविश्रान्तिरिष्यताम्" ॥ इति ॥

तद्वचनजातस्य यथा नारायणावताराणां कृष्णादीनां उक्तजगत्कारणत्वादिकं नारायण एव पर्यवस्यति न कृष्णादिषु तथा शिवावतारस्य नारायणस्योक्तं जगत्कारणत्वं शिव एव पर्यवस्यति न नारायण इत्यर्थ-तत्त्वावगमादिति चेदुच्यते । यो यस्य निर्माता स एव तत्कारणमिति सिद्धत्वेन जगत्सृष्टेः प्राक् कृष्णाद्यवताराणामभावेन तेषां नारायणत्वावस्थायामेव जगन्निर्मातृत्वं तत्कारणत्वमिति कृष्णादीनामुक्तजगत्कारणत्वं नारायणे

पर्यवस्यतीत्युक्तं युक्तमेव। सकलजगत्स्रष्टुं प्रागेव शिवादुत्पन्नेन शिवावतारेण नारायणेन निर्मितजगत्प्रति तज्जनकशिव कारणमित्येतत्त्वसङ्गतमेवेत्युक्तदोषोऽनिवृत्त एव। प्रत्युत जगन्निर्मातुस्सर्वव्यापकरूपस्य नारायणस्य शिवादुत्पत्तिकल्पनेन यथा कुलालनिर्मितघटं प्रति कुलालपितुः कारणत्वाभावः तथा नारायणनिर्मितजगत्प्रति शिवस्य कारणत्वाभाव आपद्येतैवेति, यथा तदवताराणां कृष्णादीनामीश्वरत्वेऽपि तज्जनकानां वसुदेवादीनामीश्वरत्वाभावस्तथा नारायणस्य ज ग रणत्वेनेश्वरत्वेऽपि तत्पितुश्शिवस्येश्वरत्वाभावसिद्ध एवेत्यापद्येत। एवञ्च शिवनारायणयोर्भेदोऽस्तीति उभयोर्जगत्कारणत्वसम्भवेन सकलश्रुतिषु प्रतिपादितमिदं जगत्कारणत्वं कस्योचितमिति पर्यालोचनायां नारायणजनकस्य शिवस्याथर्वशिखोपनिषदि जगत्कारणत्वाभावस्य सिद्धत्वेन नारायणस्य श्रुतिषु क्वापि जगत्कारणत्वाभिधानाभावेन नारायणस्यैवाथर्वशिखादिप्रयुक्तमपि जगत्कारणत्वं शिवस्य जगत्कारणत्वसामान्याभावश्च "विनायकं प्रकुर्वाणो रचयामास वानरं" मिति न्यायेनापद्येतैव। तर्हि नारायणस्य शिवादुत्पन्नत्वं शिवावतारत्वञ्च कल्पयतां कोऽभिप्राय इति चेदुच्यते। यद्यप्येतन्नारायणस्योक्तं जगत्कारणत्वं शिवे पर्यवस्यतीति शिवात्तस्योत्पत्ति-कल्पनमसङ्गतमेव। तथापि शिवनिन्दकानां यत्किञ्चिदनिष्टं वक्तव्यमित्याशयेनोक्तम्। शिवावतारत्वं नारायणस्योक्तंशिवाभेदस्तु वेदतात्पर्यार्थत्वेन तेषामभिमत एव तत्र श्रीशम्भोरखिलेश्वरात् बिम्बचैतन्यरूपात् ब्रह्मविष्णुगिरीशाः प्रसूयन्ते। तेषां तदंशत्वात्। "परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः" इत्यधिकरणे श्रीमूर्तिरूपाणामादित्यमण्डलान्तर्वर्तिप्रभृतीनां परब्रह्माभेदस्याभिहितत्वेनोक्ताभेदस्याप्युचितत्वात्। बिम्बचैतन्यरूपविष्णुत्वदशायामेव तदवताराणां श्रीकृष्णादीनां सर्वकर्तृत्वसर्वान्तर्यामि(क)त्वादिकं न तु मूर्तिरूपत्वदशायामिति सिद्धत्वेन यथा विष्ण्ववताराणां कृष्णादीनां उक्तसर्वकर्तृत्वसर्वान्तर्यामित्वादिकं बिम्बचैतन्यरूपविष्णौ पर्यवस्यति तथा 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्त इत्यथर्वशिरवाया बिम्बचैतन्यरूपशिवावतारत्वेनोक्तमूर्तिरूपविष्णावभिहितसर्वकर्तृत्वसर्वान्तर्यामित्वादिकं बिम्बचैतन्यरूपशिव एव पर्यवस्यतीति तेषामाशयः। तस्मात्तस्य जगन्मूलमूर्त्येकधीरिति

मूर्तेर्जगत्कारणत्वानुवादः परमतानुसारेण स्वीकर्तव्यः परैरपीति तत्रैवोक्तत्वात् । एवञ्च शिवनारायणयोरुभयोरपि चिन्मचैतन्यरूपेणैक्यं श्रीमूर्तिरूपेण भेदश्च सिद्ध्यतीति तयोस्तारतम्यगन्धस्यापि नावकाशः ।

अयमेव तेषामाशय इति कथमवगतमिति चेत्तत्रैव शिवतत्त्वविवेके श्रीकृष्णेनार्जुनाय प्रदर्शितं विश्वरूपं शिवस्य रूपमिति समर्थनप्रस्तावे, "कथं कृष्णेन शैवं रूपमात्मीयतया प्रदर्शितमिति सङ्गच्छत इति चेत् । को भाव, किं भेदान्न सङ्गच्छत इति । नैतद्युक्तम् । लैङ्गे दधीचेन महर्षिणा शैवं विश्वरूपं योगप्रभावात्प्रदर्शितमिति प्रतिपादनादिहापि 'दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ।' इति वचनाच्चास्याच्च योगप्रभावादेव दर्शितमिति कल्पनोपपत्तेः । वस्तुतस्तु भेदस्यैव वैदिकमर्यादासिद्धत्वात् गिरिराजाय पार्वत्येवाभेदात् ऐश्वरं रूपमात्मीयतया प्रदर्शितमित्येव सङ्गच्छतेतरा" मित्युक्तम् ।

तत्र विष्णुशिवयोर्भेदपक्षे कृष्णेन शैवविश्वरूपस्य आत्मीयत्वेन प्रदर्शने साधनत्वेन योगमुक्त्वा अभेदपक्षे साधनत्वेनाभेद एवोक्तः । अयञ्च विष्णुशिवयोरभेदः सर्वज्ञत्वसर्वशक्तिमत्त्वसर्वकारणत्वसर्वान्तर्यामित्वादिविशिष्टचिन्मयचैतन्यरूपेणैवेति वक्तव्यम् । श्रीमूर्तिरूपेण तयोर्भेदस्य सिद्धत्वात् । न च सोऽभेदो जीवेश्वरयोरिव शुद्धचैतन्यरूपेणैवेति वाच्यम् । विकल्पासहत्वात् तथा हि दीक्षिता एतत्पक्षद्वयं जीवेशयोर्भेदवादिनं प्रति वा उभयवादिनं प्रति वा अभेदवादिनं प्रति वाऽभिहितवन्तः । नाद्यः—अभेदपक्षस्य भेदवादिनोऽभावेन तं प्रति तत्पक्षद्वयाभिधानस्यासङ्गतत्वात् । न द्वितीयः । भेदपक्षस्याभेदवादिनोऽभावेन तं प्रत्यपि पक्षद्वयाभिधानस्यासङ्गतत्वात् । भेदवादिनं प्रति भेदपक्षमभेदवादिनं प्रत्यभेदपक्षमोक्तवन्त इति तृतीयपक्षोऽप्यदक्षः । तत्राभेदवादिन प्रत्युक्ताभेदपक्षेऽभेद एव तद्रूपप्रदर्शनसामर्थ्ये हेतुः, अथ वा योगप्रभावोऽपि नाद्यः, ऐश्वररूपप्रदर्शनसामर्थ्यस्य त्वदभिमताभेदज्ञानस्य च साध्यसाधनभावे प्रमाणाभावात् । अन्यथा शुद्धचैतन्यरूपाभेदज्ञानवतां सर्वेषां तत्तादृशकल्पनापत्तेः त्वदभिमताभेदज्ञान दधीचस्यास्त्येवेति पुराणेषु सुप्रसिद्धत्वेन भेदपक्षे

दृष्टान्ततयोक्त तमपहायाभेदपक्षे दृष्टान्तत्वेन पार्वत्यभिधानगौरवस्य प्रयोजनाभावाच्च। अपि च दधीचकर्तृकविश्वरूपदर्शनसामर्थ्यं साधनतया श्रुतेन 'पश्य मे योगमैश्वरम्' इति कृष्णगततया श्रुतेन भेदपक्षे योगप्रभावादेव दर्शितमिति दीक्षितैरुक्ते दैवयोगप्रभावेनोपपत्तौ तत्सामर्थ्यं प्रति साधनत्वेनाश्रुतस्य भगवद्गीतासु कृष्णगतत्वेनाश्रितस्य त्वदभिमतशिवाभेदस्य तत्सामर्थ्यं प्रति साधनत्वकल्पनमसङ्गतमेव। अत एव न द्वितीय, तत्सामर्थ्यं प्रति साधनतया कल्प्तेन योगप्रभावेनैवोपपत्तौ त्वदभिमताभेदस्यापि तत्साधनत्वकल्पने मानाभावात्। एतच्चात्यन्तामङ्गलमेव दीक्षिता आहुरिति तेषां भ्रान्तिकल्पनापत्ते। सर्वज्ञानां तेषां भ्रान्तिकल्पनापेक्षया विष्णुनिन्दकस्य तदभिप्रायमजानत तवैव भ्रान्तिकल्पनस्योचितत्वात्। तत्र दीक्षितैर्विष्णुशिवयोरुक्ताभेदो जगदुदयस्थितिलयहेतुभूतनिम्बचैतन्यरूपेणैवेति पक्षे तु न कोऽपि दोष इत्ययमेव पक्ष अभेदादिश्वर रूपमात्मीयतया दर्शितमित्यभिहितवतां तात्पर्यविषय। अयं पक्षो दीक्षितानां वेदतात्पर्यविषयत्वेनाभिमत इत्येतदपि 'वस्तुतस्तु अभेदस्यैव वैदिकमर्यादासिद्धत्वा'दित्येतदभेदपक्षस्य प्रशंसनेन भेदपक्षे अवस्तुत्वावैदिकत्वामर्यादासिद्धत्वरूपनिन्दाया अवगमितत्वा सिद्धमेव। स्वपक्षनिन्दाया परपक्षप्रशंसायाश्चासम्भावितत्वात्। दीक्षितैरेव सिद्धान्तलेशसङ्ग्रहे चतुर्थपरिच्छेदे मुक्तजीवानां बिम्बचैतन्यरूपपरमेश्वरेणैक्यमुक्त्वाभिहित "न परमेश्वरस्य रघुनाथावतारे तामसत्ववत् स्वसमर्गादिश्रवणा-मुक्तानामीश्वरभावे पुनर्बन्धापत्ति। तस्य भृगुशापापोषत्वादिस्वकृतमर्यादापरिपालनाय कथञ्चित् भृगुशापादिसत्यत्वं प्रत्याययितुं नटवदीश्वरस्य तदभिनयमात्रपरत्वात्। अन्यथा तस्य नित्यमुक्तत्वानिरवग्रहस्वातन्त्र्यसमाभ्यधिकराहित्यादिश्रुतिविरोधा" दिति। तत्र बिम्बचैतन्यरूपो विष्णु श्रीमूर्तिरूपविष्णुस्सन् भृगुशाप प्राप्य श्रीराम मूर्तिरूपेणावतीर्ण इत्यर्थो विस्पष्ट विष्णुर्भृगुशाप प्राप्य श्रीरामरूपेणावतीर्ण इत्यस्य रामायणेऽपि प्रसिद्धत्वात्।

न च श्रीरामस्योक्त परमेश्वरैक्य नित्यमुक्तत्व निरवग्रहस्वातन्त्र्य समाभ्यधिकराहित्यञ्च सरूपाभिप्रायकमिति वाच्यम्। तथात्वे तमस्त्ववदु-स्वसमर्गादेरभिनयरूपत्वासिद्ध। एव शिवस्यापि बिम्बचैतन्यरूपत्व

तेषां विवक्षितमेवेति बिम्बचैतन्यरूपेण विष्णुशिवयोरभेदः श्रीमूर्तिरूपेण भेदश्च दीक्षितानामभिमत इत्येतत्तत्रापि सिद्धमेव । ब्रह्मतर्कस्तवादिग्रन्थान्तेऽप्ययमर्थः स्फुटतयैवोक्तः । तदग्रे दर्शयिष्यते ।

अपि चात्र नारायणस्योत्पत्तिकल्पने परमशिवो धर्मी नारायणस्तु धर्म इत्येष विभागः जीवब्रह्मविभागवदनादिरिति रत्नत्रयपरीक्षागतस्वोक्तिविरोधापत्तिः । अनादेरुत्पत्त्ययोगात् । "एको ह वै नारायण आसीदि" त्यस्य परमशिवान्नारायणः प्रादुरासीदित्यर्थ एवं न सम्भवत्येव । 'लोहितो रोहितादासीदि'त्यत्रेवावध्यर्थकपञ्चम्यन्तसमभिव्याहारमात्रेण आसीदित्यनेन सत्तारूपार्थस्यैव उत्पत्तिरूपार्थस्याधिक्यप्रतीतेः । विना कारणमप्रतीतार्थकल्पने च प्रतीतार्थहानाप्रतीतार्थोपादानयोः प्रसङ्गात् । आसीदित्यस्योत्पत्त्यर्थकत्वलाभाय 'एको ह वै' इत्यतः प्राक् परमशिवादिति पञ्चम्यन्तस्याध्याहारपक्षे तदध्याहारस्यैव दोषत्वात् तदनाश्रयणेऽप्यनुपपत्त्यभावात् ।

अपि च नारायणे एकत्वाभिधानस्य प्रयोजनाभावेन एक इत्यस्य वैयर्थ्यमापद्येत । उक्तोत्पत्त्यनाश्रयणे तु एक इत्यस्य नारायण इत्येतद्विशेषणस्य सतः जगत्सृष्टौ नारायणवत्कारणान्तरमप्यस्तीति शङ्कावारणेन जगतस्तदुपादानकारणं निमित्तकारणमप्ययमेवेति नारायणगताभिन्ननिमित्तोपादानत्वप्रस्थापनार्थतया प्रयोजनवत्त्वं सिद्धमेव । भवत्पक्षे शिवनारायणयोरभेदेऽपि सर्वथैकशब्दवैयर्थ्यमनिवार्यमेव । किञ्च "स एकाकी न रमेत" इति नारायणस्याकाशादिसृष्टेः प्रागेकाकित्वाभिधायकवाक्योपरोधः । युष्मत्पक्षे तदा शिवनारायणयोरुभयोस्सत्त्वात् किञ्चात्र नारायणस्य वियदादिसकलजगदुपादानकारणत्वमभिधीयते । तच्च बिम्बचैतन्यरूपस्यैव न मूर्तिरूपस्य, तस्य कार्यरूपे वियदादिजगत्यनुस्यूत्यभावात् । जगत्सत् जगत्स्फुरति प्रियं चेति सच्चिदानन्दरूपस्यैव बिम्बचैतन्यस्य कार्यरूपवियदादिजगत्यनुस्यूतेर्दर्शनात् । मृदादिरूपोपादानस्य घटाद्यनुस्यूतेः सुप्रसिद्धत्वात् ।

न च बिम्बचैतन्यगतसर्वज्ञत्वादीनां कार्येष्वनुस्यूत्यभावेऽपि सर्वज्ञत्वादिविशिष्टस्योपादानत्ववत् मूर्तेरनुस्यूत्यभावेऽपि तद्विशिष्टस्यैवोपादानत्वं कि

न स्यादिति वाच्यम्, पाषाणादिभस्मसु पाषाणादिगतकाठिन्यादिधर्माणां केषाञ्चिदनुस्यूत्यभावेऽपि उपादानभूतधर्म्यंशस्य सर्वस्याप्यनुस्यूतिर्नियत्यदर्शनेन कार्येष्वननुस्यूतस्योपादानताया अदर्शनेन चाकाशादिष्वननुस्यूतमूर्तेरुपादानत्वमनोरथस्याप्यसङ्गतत्वात्। इदं पाषाणभस्मेदं काष्ठभस्मेदं तृणभस्मेदं गोमयभस्मेत्युपादानरूपधर्म्यंशस्य सर्वस्यापि कार्येष्वनुस्यूतेर्वक्तव्यत्वात्।

अत्रानुपमनिरवधिकमौढ्यपारावारा आरण्यकनराः केचित् मूर्तिविशिष्टबिम्बचैतन्यमेवाकाशादिकारणम्। तत्र मूर्तिर्निमित्तम्। बिम्बचैतन्यमुपादानम्। एवञ्च मूर्तेराकाशादिष्वनुस्यूतिरनपेक्षितैवेति विकत्थन्ते। तत्तुच्छम्। अभिन्ननिमित्तोपादानमित्यस्य यन्निमित्तं तदेवोपादानम्। यदुपादानं तदेव निमित्तमित्यर्थे पर्यवसन्नत्वेन मूर्तिबिम्बचैतन्ययोर्भेदस्य सिद्धत्वेन मूर्तिर्निमित्तं बिम्बचैतन्यमुपादानमिति पक्षस्याभिन्ननिमित्तोपादानं ब्रह्मेति सिद्धान्तविरुद्धताया विस्पष्टत्वात्।

किञ्च मूर्तिविशिष्टबिम्बचैतन्यं निमित्तं ततोऽन्यद्बिम्बचैतन्यमात्रमुपादानमिति वा मूर्तिविशिष्टबिम्बचैतन्यमेव निमित्तमुपादानञ्चेति वा विवक्षितम्। नाद्यः—बिम्बचैतन्यद्वयस्य कारणत्वापत्त्याभिन्ननिमित्तोपादानत्वसिद्धान्तविरोधापत्तिरित्युक्तदोषस्य दृढीकरणापत्तेः। द्वितीयपक्षे पृथगवस्थितयोर्मूर्तिबिम्बचैतन्ययोः कारणत्वं विवक्षितमुत नीरक्षीरवन्मिलितयोर्वा? नाद्यः, चैतन्यात्पृथग्भूताया मूर्तेर्जडत्वेन चैतन्याधिष्ठितत्वाभावेन च कारणत्वासम्भवात्। न द्वितीयः, नीरेण क्षीरवदुपादानकारणेनैकीभावमापन्नस्य निमित्तताया अप्रसिद्धत्वात् घटाद्युपादानरूपमृदादिसंमिलितसिकतादेर्घटादावनुस्यूतेस्तदुपादानताया अनिमित्ततायाश्च दर्शनात्। लोमादीनामुपादानकारणेन शरीरेणैकीभावमापन्नजीवचैतन्यस्य लोमाद्युपादानत्वावगमाच्च लोमादिकं सन् स्फुरतीति लोमादिषु जीवचैतन्यस्यानुस्यूतेर्वक्तव्यत्वात्। आकाशवायुविशिष्टबिम्बचैतन्यस्य तेजः प्रति कारणत्ववत् जीवचैतन्यशरीरादिविशिष्टबिम्बचैतन्यस्य लोमादिकं प्रत्युपादानत्वसम्भवात्। अतोऽसङ्गतमेव सृष्टेः प्रागाकाशाद्युपादानरूपबिम्बचैतन्यस्य मूर्तिमत्त्वं तन्मूर्तेर्निमित्तत्वञ्च।

किञ्च जीवः निरवयवस्यैव परमेश्वरस्य प्रतिबिम्ब इत्यप्पय्यदीक्षितप्रभृतिभिः सर्वैरपियुक्तैरत्येव संरम्भपूर्वकमभिधानेन जीवस्येश्वरसमानसामर्थ्यमस्त्येव । तच्च तिरोहितमिति शारीरकमीमांसायां "पराभिध्यानात्तु तिरोहित" मित्यधिकरणे "देहयोगाद्वा सोऽपी" ति सूत्रे समर्थनेन, च निरवयवस्यैवेश्वरस्य सर्वसामर्थ्यमिति सिद्धत्वेन, "तत्सृष्ट्वा तदेवानुप्राविशदि" ति श्रुतेर्निरवयव एवेश्वरस्सर्वं सृष्ट्वा जीवरूपेण प्राविशदित्यर्थकत्वसिद्धया सृष्टेः प्राक् मूर्तिराहित्यम् ।

अपि चाथर्वशिखोपनिषदि 'नेशान' इति सर्वेश्वरस्य शिवस्य सृष्टेः प्राङ् मूर्तिरूपेणावस्थाननिषेधात आकाशादिसृष्टयभिधानानन्तरं "त्र्यक्षश्शूलपाणिः पुरुषोऽजायते" त्यादिना "तस्मादीशानो महतां देवानां महादेव" इत्यन्तेन सन्दर्भेण तस्य मूर्तिरूपेणोत्पत्त्यभिधानाच्च सिद्ध एव सर्वेश्वरस्य शिवस्य सृष्टेः प्राक् मूर्त्यभावः । न च शिवस्य मूर्तिनिषेधोत्पत्तिपरमिदं सन्दर्भद्वयं प्राकृतमूर्तिविषयकमेव 'शिव एव केवल' इत्यादिश्वेताश्वतरवचनादिभिः सृष्टेः प्राक् तस्य मूर्तिमत्त्वप्रत्यायनेनाप्राकृतमूर्तिमत्त्वसम्भवादिति वाच्यम् । शरीरत्वेन हेतुना करचरणाद्यवयववत्त्वेन च परमेश्वरशरीरस्यापि सावयवत्वसिद्धया सावयवत्वेन हेतुनोत्पत्तिसिद्धया उत्पन्नानां सर्वेषामुत्पन्नत्वादेव मायिकत्वसिद्धया च पेचकवदप्रमुदितया चिरकालं लम्बमानेनाप्यप्राकृतमूर्तिसाधनासम्भवात् । पुराणादिषु परमेश्वरमूर्तेरप्राकृतत्वव्यवहारस्तु इयं प्राकृतभाषा तद्भिन्नेयं गीर्वाणभाषेतिवत् जीवानां शरीराणि पाञ्चभौतिकानि प्राकृतानि, परमेश्वरस्य, शरीरन्तु भूतानि विनैव स्वेच्छयाङ्गीकृतं मायामयं, तदेव जीवशरीरवैलक्षण्यद्योतनायाप्राकृतमिति व्यवह्रियते । अत एव भगवत्पादैर्भगवद्गीताचतुर्थाध्याये—

"जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन" ॥

इति वचनस्य भाष्येऽभिहितम् "जन्म मायारूपं कर्म साधूनां परित्राणादि । मे मम दिव्यमप्राकृतमैश्वरं एवं यथोक्तं यो वेत्ति तत्त्वतः तत्त्वेन यथावदि" ति । अत्र भाष्ये जन्म मायारूपमिति दिव्यमप्राकृतमैश्वरमिति च मायामय

एवाप्राकृतत्वव्यवहारो विस्पष्टः। अत्राप्राकृतमैश्वरमित्यनेन परमेश्वरस्य मायामयमप्राकृतशरीरं स्वेच्छया निर्मितमेव न त्वनादीति दर्शितम्। उक्तञ्च श्रीमद्भागवते "स्वेच्छावपयस्य न तु भूतमयस्य कोऽपी" ति। एवञ्चेश्वरस्य शरीराणि सर्वाणि मायिकान्येवाप्राकृतशब्देन व्यवह्रियन्त इति सिद्धतया सृष्टेः प्राक् नेशान इत्यादिनावगतस्य परमेश्वरमूर्तेः प्रतिषेधस्य सृष्ट्यनन्तरमाविर्भावस्य शिव एव केवल इत्यादिना सृष्टेः प्राक् शिवमूर्तेरवस्थानबोधने तदवस्थानस्य चैकमायिकमूर्तिविषयकताया-सिद्धत्वेन शिव एव केवल इत्यादिना सृष्टेः प्राक् शिवमूर्तीश्वरस्य मूर्तिमत्त्वबोधने तदा तन्मूर्तेर्निषेधस्य सृष्ट्यनन्तरं तन्मूर्तेरुत्पत्तेश्चासम्भवापत्त्या तन्निषेधतदुत्पत्तिपरवाक्ययोर्वैयर्थ्यं प्रसज्यत एवेति तद्वैयर्थ्याश्रयणात् शिव एव केवल इत्यादिवाक्यगतशिवादिपदेषु लक्षणाश्रयणमेव न्याय्यम्। वाक्यवैयर्थ्याद्वरीयसी लक्षणेति न्यायात्। सर्वेश्वररूपशिवस्यैव नेशानेत्या-दिना मूर्तिप्रतिषेधादिकमित्यग्रे वक्ष्यते।

"उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्त" मिति कैवल्योपनिषदि उक्ता मूर्तिरूपाक्षशूलपाणिः पुरुषोऽजायतेत्यादि-नैतन्महोपनिषदुक्तमूर्तिरेव। कैवल्योक्तमूर्तेरपि शरीरत्वहेतुना करचरणा-द्यवयवत्वेन च सावयवत्वे सावयवत्वहेतुनोत्पन्नत्वमुत्पत्तिमत्त्वहेतुना मायिकत्वञ्च सिद्धमेवेत्येतन्मायामयमूर्तेः सृष्टेः प्राकालाविर्भावकल्पने सृष्टेः प्रागुत्तरत्र तन्मायिकमूर्तेरविद्यमानत्वोत्पन्नत्वबोधकवचनद्वयवैयर्थ्या-पत्त्या कैवल्यगतवाक्येन "रूपाक्षशूलपाणिः पुरुषोऽजायते" त्यादिमहोपनि-षद्वाक्येन चैकैव मूर्तिरिसिद्ध्यति। लाघवाद्बाधकाभावात्। त्रिलोचनमिति रूपाक्षमिति चोभयत्र त्रिणेत्रत्वाभिधानेन परमेश्वरमितीशान इति च सर्वेश्वरत्वाभिधानेन च सैवेयं मूर्तिरिति प्रत्यभिज्ञानाच्च। पुराणादि-वचनैः सृष्टेः प्राक् परमेश्वरस्य मूर्तिमत्त्वबोधने तद्वचनानां नेशान इत्यादि-श्रुतिविरोधस्य विस्पष्टत्वेन सृष्ट्यनन्तरमेवाविर्भूतमूर्तिपरत्वं यथाकथ-ञ्चिद्वक्तव्यमेव। अन्यथा श्रुतिविरोधेन तेषामप्रामाण्यापत्तेः। अतः परमेश्वरस्य सृष्टेः प्राक् मूर्तिराहित्यमुक्तं युक्तमेव।

किञ्च "ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्त" इत्यथर्वशिखायां सृष्टयनन्तरं सर्वेश्वरयोर्विष्णुरुद्रयोर्मूर्त्युत्पत्त्यभिधानेन जगत्सृष्टेः प्राक् तयोर्मूर्त्यभावसिद्धः । तदा तयोर्मूर्तिसत्त्वे मानाभावात् ।

विष्णोरीश्वरत्वमुक्तमथर्वशिखायामेव । तथा हि "द्वितीयान्तरिक्षं उकारस्स यजुर्भिर्यजुर्वेदो विष्णुरि"त्यत्र विष्णुशब्देन तद्व्यर्थरूपनारायणेऽवगते व्यापकत्वरूपसर्वेश्वरत्वलिङ्गेन तस्य सर्वेश्वरत्वं सिद्धमेव । तथा "द्वितीया विद्युमती कृष्णा विष्णुदेवत्ये" त्यत्र विष्णुशब्देन, तथा ध्यानं विष्णुरित्यत्रत्यविष्णुशब्देन, तथा ब्रह्मविष्णुरुद्रेत्यत्रत्यविष्णुशब्देन च सिद्धमेव तस्य सर्वेश्वरत्वमिति । तत्रैव रुद्रस्यापि सर्वेश्वरत्वमुक्तम् । तथा हि को वा ध्यातेति प्रश्नस्य जीवरूपध्याता परमात्मा तदन्यो ध्येति तात्पर्यम् । यस्तु ध्यानं करोति स एव ध्यातेत्यस्य प्रत्यक्षसिद्धत्वेन प्रश्नाविषयत्वासम्भवात् । सृष्टयनन्तरं कः प्रथमं ध्यातेति वा कः श्रेष्ठः ध्यातेति वा तात्पर्यकल्पने ध्यातेत्यस्यानुपमध्यानविरोधिनस्सामान्यश्रुतस्य विना कारणं सङ्कोचकल्पनापत्ति । ध्यातैव न ध्येयः क इति तात्पर्यकल्पने एवकाराध्याहारापत्ति । एवकारार्थे तात्पर्यकल्पनापत्त्या वाक्यभेदापत्तिश्च । एवमेतत्प्रश्नस्योत्तररूपे ध्याता रुद्र इति वाक्ये रुद्रस्य परमात्मत्वं सिद्धवत्कृत्य सकलध्यातॄनुद्दिश्य 'तत्सृष्ट्वा तदेवानुप्राविश' दिति तात्पर्येण रुद्रत्वं विहितम् । अन्यथा चतुर्दशभुवनेषु विद्यमानसकलध्यातॄनुद्दिश्य रुद्रत्वविधानासम्भवात् । किञ्च चतुर्दशभुवनेषु विद्यमानसकलध्यातॄणां रुद्रत्वेऽभिहिते तस्य सार्वात्म्यसिद्ध्या सार्वात्म्यस्येश्वरत्वलिङ्गत्वेन तस्य सर्वेश्वरत्वं सिद्धम् । एवञ्च 'ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्त' इति वाक्यं न विष्णुरुद्रयोस्सर्वेश्वरत्वमानित्यत्वकार्यत्वाभिधानसमर्पणम् । किन्तु विष्णुरुद्रयोः स्वेच्छयोपात्तदिव्यरूपोत्पत्त्यभिधायकम् । तयोरीश्वरत्वपरश्रुतिभ्यो बाधस्य दुर्वारत्वात् । प्रथमश्रुतिभ्यस्तयोरीश्वरत्वलिङ्गेभ्यश्चान्यश्रुतस्यापरत्वात्राविरोधित्वेनाभ्युपगमस्य दुर्वारत्वात् । अतःसिद्धं तयोस्सर्वेश्वरत्वम् ।

ननु " उमासहायमिति, आग्निर्मूर्धेति, सहस्रशीर्षेति, हिरण्यश्मश्रुरिति, पुरुष नृकेसरिविग्रहमि "ति च परमेश्वरयोस्तयोरुत्पत्तिरहितबहुमूर्त्यभिधायकश्रुतय एवोक्तार्थे प्रमाणमिति चेन्न । तन्मूर्तीनामपि शरीरत्वहेतुना करचरणाद्यवयवत्वेन च सावयवत्वमिद्धा सावयवत्वहेतुनोत्पन्नत्वसिद्ध्या तासां सृष्टेः प्रागनन्तरं चोत्पत्तिरिति संशये कासाञ्चित्सर्वेश्वरमूर्तीनां सृष्ट्यनन्तरमुत्पन्नत्वश्रवणेनासामपि सृष्ट्यनन्तरमुत्पन्नत्वस्यैवोचितत्वात् । विश्वतश्चक्षुरित्यादिश्रुत्या परमेश्वरमूर्तिरेवोच्यत इति पक्षे 'द्यावाभूमी जनयन्देव' इति वाक्येन स्वर्गलोकभूलोकसृष्ट्यनन्तरमेव तन्मूर्तिरुच्यत इति न कोऽपि विरोधः । ब्रह्माण्डादुत्पत्त्यनन्तरमुत्पन्नमूर्तेरपि तत्सम्भवात् । एव,

" मुखादिन्द्रश्चाग्निश्च । प्राणाद्वायुरजायत ।
नाभ्या आसीदन्तरिक्षम् । शीर्ष्णो द्यौस्समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात् " ॥ इत्यादौ

चन्द्रपूर्वेन्द्रसमभिव्याहारेणोक्तवह्निवायू दिक्पालावेव महाभूतात्मकाग्निवायुसंष्टे प्राक् रुद्रचन्द्रसूर्येन्द्रसृष्ट्यसम्भवात् । अग्निसृष्ट्यनन्तरं वायुसृष्ट्यसम्भवाच्च । अत एव नाभ्या आसीदन्तरिक्षमित्यत्रत्यान्तरिक्षशब्दः " अन्तरिक्षलोकेषु गार्गी " त्यादिश्रुत्यन्तरे प्रसिद्धान्तरिक्षलोकपरः । रुद्रचन्द्रादिसृष्ट्यनन्तरं महाभूतरूपाकाशसृष्टेरप्यसङ्गतत्वस्य समानत्वात् । एतदन्तरिक्षसमभिव्याहारात् द्यौर्भूमिशब्दावपि द्युलो भूलोकपरौ । रुद्रादीन् सृष्ट्वा तेषां स्थानाकाङ्क्षाया इमाल्लोँकान् सृष्टवानिति न कोऽपि विरोधः । अथवा बृहदारण्योपनिषदि प्रसिद्धब्रह्मक्षत्रवैश्यशूद्रादीनुत्पाद्य एतान् लोकानुत्पादितवान्परमेश्वर इत्यवगन्तव्यम् । एवमेव सृष्टिसहस्रशीर्षेत्यादिनोक्तमूर्तेः ब्रह्माण्डोत्पत्त्यनन्तरमुत्पन्नत्वेऽपि सम्भवतीति न कश्चिद्विरोधः ।

नन्वस्तु शिवस्यैवम् । मूर्तिरूपनारायणस्य तु जगत्कारणत्वमनिवार्यमेव । तथा हि अस्यामेव महोपनिषदि " अथ पुनरेव नारायणस्सोऽन्यत्कामो मनसाध्यायत तस्य ध्यानान्तस्थस्य ललाटात् स्वेदोऽपतत् ता

मूर्तिमत्वकल्पने गौरवात् प्रयोजनाभावात् प्रयोजनरहितार्थसमर्पकत्वे वचनानामप्रामाण्यापत्तेः एतन्मूर्तिसृष्टौ यत्कारणतावच्छेदकं तस्यैव जगत्सृष्टावपि कारणतावच्छेदकत्वसम्भवाच्च । अत एव न तृतीयः । उक्तदूषणानामत्रापि समानत्वात् । उत्पन्नस्योत्पन्नत्वहेतुना परिच्छिन्नत्वसिद्धेश्च । पक्षत्रयेऽपि मूर्तिसृष्टौ कारणतावच्छेदकमनपेक्षितमिति चेत्तज्जगत्सृष्टावपि समानमिति वक्तुं शक्यमेव । एवञ्च शिव एव केवल इत्यादिवचनैराकाशादिसृष्टेः प्राक् श्रीमूर्तिसद्भावबोधने, तदा प्रयोजनलेशस्याप्यभावेन तदर्थबोधकवाक्यानामप्रामाण्यापत्त्या सृष्टेः प्राक् विद्यमानशिवस्य जगत्कारणत्वावश्यम्भावेन जगत्कारणताया मूर्तेरनुपयुक्तत्वेन शिव एव केवल इत्यादिवाक्यगतशिवादिपदानां लक्षणया यौगिकया वृत्त्या बिम्बचैतन्यरूपत्वमेव न्याय्यम् । एवञ्च "कारणन्तु ध्येयस्सर्वैश्वर्यसम्पन्नस्सर्वेश्वरश्शम्भुराकाशमध्ये" इति वाक्यस्य कारणरूपबिम्बचैतन्यं शिवमूर्तिरूपमापन्नं सत् ध्येयमित्यर्थोऽवगम्यते । तुशब्दः अकारणरूपप्रतिबिम्बचैतन्यानां ध्येयत्वनिवारणेन प्रकृतध्याने प्रवृत्तिजनकः । अत्र शम्भुशब्दावगतमूर्तेरनादित्वकल्पने सृष्टेः प्रागाविर्भावकल्पने वा तदनादितायाः सृष्टेः प्राक्काले तदवस्थितेश्च प्रयोजनलेशस्याप्यभावेन सृष्ट्यनन्तरमाविर्भूतत्वमेव वक्तव्यमित्ययं शम्भुः प्राक् सर्वेश्वरत्वेन प्रदर्शितरुद्र एव । तदर्थस्योभयत्र सर्वेश्वरत्वप्रदर्शनेनावगमात् । तत्रैवोभयत्र उपास्यत्वप्रदर्शनाच्च । आविर्भूतत्वेनेश्वरत्वेन च प्रतिपादितरुद्रमूर्तेर्मुख्यप्रयोजनान्यथानुपपत्त्या उपास्यत्वस्य सिद्धत्वात् । किञ्च रुद्रेति शम्भुरित्यभिधानश्रुत्योरेकार्थाभिधायकत्वं सुप्रसिद्धमेव । अपि च रुद्रशब्दशम्भुशब्दयोरेकार्थप्रतिपादकत्वं लाघवाद्विरोधाभावाच्च सिद्धमेव । अतः परमेश्वरस्य आकाशादिसृष्टेः प्राक् मूर्त्यभावसिद्ध इत्युक्तं युक्तमेव ।

अपि च "ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते । नारायणाद्रुद्रो जायते" इत्यादिश्रुतिषु सृष्ट्यनन्तरमाविर्भूतत्वेनाभिहितमूर्तीनामुपादानं विना सत्त्वे मानाभाव । असाधारणप्रयोजनालाभेन श्रुतिभिरेतासामुपास्यत्वप्रदर्शनात् । यथा "षड्विंशतिरस्य वङ्क्रय ( )" इति श्रुत्या पार्श्वद्वयपङ्क्तीनां समस्याभिधानम् । आश्वमेधिकपशुत्रयस्य पङ्क्तयस्समस्य वक्तव्या इत्यवगामिनम् ।

तथात्रापि सृष्ट्यनन्तरमाविर्भूतमूर्तीनामेवोपास्यत्वम् । न त्वनादीनां सृष्टेः प्रागाविर्भूतानां वेति नाभिः श्रुतिभिरवगमितमिति सिद्धमेव परमेश्वरस्य सृष्टेः प्राक् मूर्तिराहित्यम् । किञ्च पृथिव्यप्तेजोवायूनां महाभूतानां शब्दस्पर्शरूपरसगन्धेषु पञ्चगुणेषु एकैकगुणरहितपदार्थजन्यत्वैनयत्यश्रवणेन विवादास्पदीभूतस्य शब्दैकगुणकाकाशस्यापि स्वापेक्षयैकगुणरहितपदार्थजन्यत्वमावश्यकमिति न्यायेन,

"अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत् ।
अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते" ॥

इति कठवल्लीश्रुत्या "अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्क" मित्यादिना सकलजगच्छास्तृ-
इति कठवल्लीश्रुत्या "असङ्गमरसमचक्षुष्क" मित्यादिना सकलजगच्छास्तृप्रतिपादिकया बृहदारण्यपञ्चमाध्यायश्रुत्या च शब्दादिपञ्चगुणराहित्यजगत्कारणं बिम्बचैतन्यमेवेत्यवश्यं वक्तव्यत्वेन तथा भूतस्यैतत्पञ्चगुणराहित्यासम्भवेन तथा परमेश्वरे गन्धरसादिमत्वाभावस्य सृष्ट्यनन्तरमाविर्भूतश्रीमूर्त्यभिप्रायकत्वेन च सिद्धमेव सृष्टेः प्राक् परमेश्वरस्य मूर्तिराहित्यम् ।

अपि च 'य आकाशे तिष्ठन्नाकाशादन्तरो यमाकाशो न वेद यस्याकाशश्शरीरं [redacted] आकाशमन्तरो यमयत्येष त आत्मान्तर्याम्यमृत" इत्यादिश्रुतिवचनेषु बहुषु सर्वान्तर्यामिरूपपरमात्मनि "एष [redacted] आत्मे" इत्यादिश्रुतिषु आकाशात्मशब्दप्रयोगेण, तथा "आत्मन आकाशस्सम्भूत" इत्यादिश्रुतिषु आकाशकारणे परमात्मनि आत्मशब्दप्रयोगेण च आकाशान्तःस्थितन् तेनाविदितस्तन्नियामकस्तच्छरीरकश्च सर्वान्तर्याम्येवाकाशजनकीभूतात्मेति अत्रत्यात्मशब्देन प्रत्यभिज्ञायमानत्वेनाकाशान्तर्यामिण एवाकाशजनकत्वं सिद्धम् । मूर्तिरूपस्याकाशान्तर्यामित्वासम्भवात् ।

अपि च बिम्बचैतन्यस्य शरीरादियोगं बिना सृष्ट्यादौ सामर्थ्यं न सम्भवतीति तस्य तत्सामर्थ्यसिद्धये शरीरादियोगः कल्प्यतेऽथवा सृष्ट्यादिकरणे तस्यानपेक्षितमेव शरीरादियोगमभिदधद्वचनात्तस्य तत्कल्प्यते।

आद्यपक्षे शरीरादिरहितस्य बिम्बचैतन्यस्य जगत्स्रष्टृत्वसामर्थ्यं किं प्रमाणाभावान्न सम्भवतीत्युच्यते, दृष्टान्ताभावाद्वा । नाद्य । ईशोपनिषदि "अकायमव्रण"मित्यस्य, कठवल्ल्या 'अशरीरं शरीरेष्वि"त्यस्य, मुण्डकोपनिषदि 'अवर्णमचक्षुःश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनि"मित्यस्य, तत्रैव—

'अप्राणो ह्यमनाश्शुभ्रो ह्यक्षरात्परतः परः ।
एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' ।

इत्यस्य, बृहदारण्यकपञ्चमाध्याये 'अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्य' मित्यस्य, सर्वशास्तृत्वविशिष्टबिम्बचैतन्यात्मकपरमेश्वरार्थकस्य, श्वेताश्वतरोपनिषदि—

'अपाणिपादो जवनो ग्रहीता
पश्यत्यचक्षुस्स शृणोत्यकर्णः ।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता
तमाहुरग्र्यं पुरुषं महान्तम्"

इत्यस्य तत्रैव,

'न तस्य कार्यं करणञ्च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते ।
पराऽस्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च"।

इत्यस्य च, एवञ्जातीयकपुराणादिवचनजातस्य च प्रबलप्रमाणस्य सत्त्वात् । द्वितीये, वामनेत्रवद्दक्षिणनेत्रमपीत्यादाविव सर्वांशदृष्टान्ताभावाद्वा अग्निरिव शरोऽयं माणवक इत्यादाविवैकदेशदृष्टान्ताभावाद्वा । नाद्य, नित्यज्ञानेच्छादिमानीश्वर इति मते तादृशस्यान्यस्याभावेन तदीश्वरसिद्ध्यभावापत्तेः । अनन्तकल्याणगुणको नित्याप्राकृतशरीरक ईश्वर इति मते तादृशस्यान्यस्याभावेन तदीश्वरसिद्ध्यभावापत्तेः । अनिर्वाच्यमायाशबलितबिम्बचैतन्यरूप एवेश्वर इति वैदिकमते च तादृशस्यान्यस्याभावेन तदीश्वरसिद्ध्यभावापत्तेः ।

न चेष्टापत्तिरिति केनचिदीश्वरवादिना शङ्कितुं शक्यम् । स्वतन्त्रमचेतनं प्रधानमेव सकलजगदुत्पत्तिस्थितिलयहेतुरिति साङ्ख्यमते तत्सदृशांशस्यान्यस्याभावेन तदसिद्ध्यापत्तेः। स्वतन्त्रमचेतनमतीन्द्रियं निर्गुणमपूर्वमेव सकलसुखदुःखप्रदमिति पूर्वमीमांसकानां मते तादृशस्यापूर्वत्वावच्छिन्नादन्यस्याभावेन तदसिद्ध्यापत्तेः। न च तत्रापीष्टापत्तिरिति वाच्यम् । शब्दगुणकसर्वव्यापक आकाश इति पक्षे तत्सदृशस्यान्यस्याभावेन तदसिद्ध्यापत्तेः। एवमेव वायुचन्द्रसूर्याग्निलवणसमुद्रपृथिव्यादीनामसिद्ध्यापत्तेश्च । न द्वितीयः। शरीररहिते वायौ वृक्षभञ्जनजीर्णपत्रसिकतादिराशीकरणादिहेतुत्वस्य, तथा व्यजनपवनो श्रमहरणं प्रति प्रदेशान्तरस्थिततूलपिण्डजीर्णचक्रादीनां प्रदेशान्तरसम्बन्धोत्पत्तिं प्रति च हेतुत्वस्य, तथा वीथ्यां वर्षेण जातप्रवाहे वीथीसिकतामयप्रदेशविशेषनिम्नोन्नत्यादर्शनहेतुत्वस्य, तथा शरीररहितजीवनिष्ठसुकृतदुष्कृतात्मकादृष्टे शरीरजनकत्वस्य, तथा शरीररहितानां ब्रह्मलोकगतमुक्तजीवानां पित्रादिसम्प्राप्तिहेतुभूतसङ्कल्पकर्तृत्वस्य च सुप्रसिद्धत्वात् । ब्रह्मलोकगतानां तेषां जीवानां शरीरभावाभावयोः ब्रह्ममीमांसायां चतुर्थाध्यायचतुर्थपादे "तन्वभावे सन्ध्यवदुपपत्तेः"। "भावे जाग्रद्व"दिति सूत्रद्वये तद्भाष्ये च सुप्रसिद्धत्वात् । निमिशापनिहतशरीरस्य वसिष्ठमहामुनेः योगप्रभावेनास्माल्लोकाद्ब्रह्मलोकगमने ब्रह्माणं प्रति शरीरान्तरयाचने पुनरागमने शरीरान्तरप्राप्तौ च सामर्थ्यमभवदिति रामायणादिषु सुप्रसिद्धम् । नाप्यद्वितीयः। अनपेक्षितार्थाभिधानप्रयोजनाभावेन प्रयोजनरहितार्थबोधने च वचनानामप्रामाण्यापत्तेः। अतः सिद्धमेव शरीररहितस्यैव विश्वचैतन्यस्य जगत्कारणत्वम् ।

किञ्च "विश्वतश्चक्षुरुत विश्वतोमुख" इत्यादिना तैत्तिरीयादिश्रुतौ परमेश्वरस्याप्राकृतमूर्तिरेवोच्यत इति पक्षे विश्वतश्चक्षुष्मती मूर्तिः तन्मूर्तेरीश्वरता च दर्शिता। "सहस्रशीर्षा पुरुषः सहस्राक्ष" इत्यादिना पुरुषसूक्तश्रुतौ सहस्रचक्षुष्मती मूर्तिस्तन्मूर्तेरीश्वरता च दर्शिता। "उमासहायं परमेश्वरं प्रभुं त्रिलोचन"मित्यादिना कैवल्यश्रुतौ उमासहाया त्रिलोचना मूर्तिस्तन्मूर्तेरीश्वरता च दर्शिता। "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ"-मित्यादिना मुण्डकश्रुतौ चन्द्रसूर्यरूपचक्षुर्द्वयवती मूर्तिस्तन्मूर्तेरीश्वरता च

दर्शिता । "ऋतं सत्यं परं ब्रह्म पुरुषं नृकेसरिविग्रहं" मित्यादिनृसिंह-पूर्वतापिनीश्रुतौ नृकेसरित्वलक्ष्मीपतित्वोमापतित्वादिविशिष्टमूर्तिस्तन्मूर्तेः पर-ब्रह्मता सर्वेश्वरता च दर्शिता । "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यत" इत्यादिना "य एषोऽक्षिणि पुरुषो दृश्यत" इत्यादिना च छान्दोग्यश्रुतौ हिरण्मयमूर्तिद्वयं तन्मूर्तिद्वयस्येश्वरत्वञ्च दर्शितमित्येतास्सर्वा अपि परमेश्वरमूर्तय इति वक्तव्यत्वेन तत्रैकस्या एव मूर्तेर्जगत्कारणत्वमुत सर्वासाम् ? नाद्यः । अस्या एव मूर्तेः कारणत्वमित्यत्र विनिगमकाभावात् । न च यस्याः मूर्तेरितरमूर्त्यपेक्षया प्राधान्यं तां प्रति कारणत्वं तास्वनु-स्यूतिर्वावगम्यते तस्या एव जगत्कारणत्वमिति वाच्यम् । सर्वासां श्रुतौ तत्परत्वं सर्वेश्वरत्वस्य च समानत्वेनास्या एव प्राधान्यादिकमित्यत्रापि विनि गमकाभावात् ।

ननु विश्वतश्चक्षुरित्यादिनोक्तासङ्ख्यातचक्षुरादिकमूर्तौ शते पञ्चाशदिति न्यायेन सहस्राक्षमूर्तीनां सर्वासामन्तर्भावसम्भवादेकैव मूर्तिरेताभिस्सर्वाभि श्रुतिभिरभिधीयत इति चेन्न । सहस्रलोचनत्रिलोचनद्विलोचनादिभेदेन मूर्तिवैलक्षण्याभिधायकश्रुतीनां वैयर्थ्यापत्तेः । मूर्तिनानात्वाभावे आदित्यपुरुषे अक्षिपुरुषे च "तदेव रूपं यदमुष्य रूपं यन्नाम तन्नाम" इत्यादिना दृष्टान्त दार्ष्टान्तिकभावाम्नानस्यापगेधापत्तेश्च । किञ्चोदाहृतश्रुतीनामनेकमूर्त्यभिधायक-त्वाभावे "अन्तस्तद्धर्मोपदेशा" दित्यधिकरणे आदित्यपुरुषाक्षिपुरुषयोरीश्वरत्व दर्शकस्य ' वैश्वानरस्साधारणशब्दविशेषा ' दित्याद्यधिकरणेषु वैश्वानरादीनां जीवत्वमुतेश्वरत्वमिति संशयापोधापत्त्या बह्वधिकरणभङ्गापत्तिः । न द्वितीय प्रतिमूर्ति सर्वसामर्थ्यस्य समानत्वेनान्यतममूर्त्यैव जगत्कारणत्वोपपत्तौ अन्यासां प्रयोजनाभावेन तासां जगत्कारणत्वरूपप्रयोजनरहितार्थबोधकत्वे श्रुतीनामप्रामाण्यापत्तेः । कासाञ्चित्सर्वज्ञत्वादिगुणानामभावेनाऽऽसां जीव-त्वापत्तेः । अतो विश्वचैतन्यस्य सृष्टेः प्राक् सिद्धमेव मूर्तिराहित्यम् ।

एतेन मूर्तिविशिष्टविश्वचैतन्यस्याभिन्ननिमित्तोपादानत्वं परमूर्तेर्निमित्तत्वं वा कारणतावच्छेदकत्वं वा पक्षत्रयेऽपि मूर्तेरन्तर्यामित्वं वक्तुं शक्यमेवेति

निरुपमनिरवधिकमहामौढ्यसर्वस्वसम्पन्नानामारण्यकपापण्डिनां मनोरथतरुर-शन्यधुतेनैव समूलं भग्नश्शशविषाणतां गतः । सृष्टेः प्राङ्मूर्तेरेवासिद्धौ तस्या उक्तोपादानत्वादेः प्रसक्त्यभावात् ।

अपि च परमेश्वरस्याप्राकृतमूर्तिमत्त्ववादिनां पक्षे ब्रह्मविष्णुरुद्रेति श्रुतिबोधितानामाकाशादिसृष्ट्यनन्तरमुत्पन्नपरमेश्वरमूर्तीनामप्राकृतत्वे सृष्टेः प्राक् परमेश्वरस्याप्राकृतमूर्त्यभावस्सिद्ध एवेति "अकायमव्रण"मित्यादिप्रागुदाहृतानां सृष्टेः प्राक् परमेश्वरस्य मूर्तिराहित्यबोधकश्रुतीनामसिद्धानुवादत्वमेव सिद्धमिति सृष्टेः प्राक् परमेश्वरस्याप्राकृतमूर्तिराहित्यं सिद्धमेव । सृष्ट्यनन्तरमाविर्भूतानां परमेश्वरमूर्तीनां मायिकत्वेऽप्यकायमव्रणमित्यादिश्रुतीनां मतान्तरे भ्रान्तिभासाप्राकृतमूर्तिनिषेधपरत्वं सिद्धमिति सिद्धमेव तदा तस्याप्राकृतमूर्तिराहित्यम् । सृष्ट्यनन्तरमुत्पत्स्यमानानां मायिकमूर्तीनां तदानीमप्रसक्तत्वेनाप्रसक्तप्रतिषेधायोगात् । तद्वचनानां प्रसक्तप्रतिषेधपरत्वे सम्भवति तदपहाय सिद्धानुवादत्वाङ्गीकारस्यान्याय्यत्वात् । अतस्तस्य तदा मूर्तिराहित्यं युक्तमेव ।

किञ्च परमेश्वरमूर्तयस्सर्वा अप्यप्राकृता एव, उत मायिका अपि उत मायिका एव? आद्ये अप्राकृतमूर्तयोऽनुत्पन्ना एवोत्पन्ना अप्यथवोत्पन्ना एव । नाद्यः, "नारायणाद्रुद्रो जायते, ललाटात्क्रोधजो रुद्रो जायते, ललाटात् त्र्यक्षः शूलपाणिः पुरुषो जायते" इत्यादीनां सृष्ट्यनन्तरमुत्पत्त्यभिधायकश्रुतीनां तच्छ्रुत्युपबृंहकपुराणादिवचनानां जानितोत (?) विष्णोर्विष्णोरुत्पत्त्यभिधायकऋग्वेदवाक्यस्य,

"बहूनि मे व्यतीतानि जन्मानि तव चार्जुन" । इति,

"सम्भवाम्यात्ममायये"ति, "सम्भवामि युगे युगे" इति, "जन्म कर्म च मे दिव्य"मिति च भगवद्गीतावचनानां पुराणादिवचनानां तथा ब्रह्माविष्णुरुद्रेति सृष्ट्यनन्तरं विष्णुशिवयोरुत्पन्नमूर्तिमत्त्वाभिधायकश्रुतेस्तच्छ्रुत्युपबृंहकपुराणादिवचनानाञ्च बाधितार्थकत्वापत्त्या अप्रामाण्यापत्तेः ।

न द्वितीय —

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे" ॥

इत्युत्पन्नमूर्तीनां प्रयोजनाभिधानेनानुत्पन्नमूर्तीनां सृष्टे प्राक् प्रयोजनाभिधायकवचनानामभावेन च तासामनादित्वकल्पनस्य व्यर्थत्वात् । न चाकाशादिजगत्कारणत्व वा कारणतावच्छेदकस्य वा मूर्त्यनादित्वस्य प्रयोजनमिति वाच्यम् । विश्वचैतन्यस्य तत्कारणतायास्तन्निष्ठसर्वज्ञत्वादे कारणतावच्छेदकतायाश्च सम्भवेन मूर्तीनां तदन्यतरकल्पने गौरवात् । प्रयोजनाभावात्प्रमाणाभावाच्च ।

नचाकाशादिसृष्टे प्राक परमेश्वरस्य मूर्तिमत्त्वप्रत्यायकवचनान्येव प्रमाणमिति वाच्यम् । प्रयोजनरहितार्थप्रतिपादकत्वेन तेषामप्रामाण्यापत्तेः । "यदा यदा ही" त्यादिना "तदात्मानं सृजाम्यहमि" त्यन्तेन यदा प्रयोजन तदैव परमेश्वरस्य मूर्त्याविर्भाव इति स्फुटमभिधानाच्च । तृतीयपक्षे उत्पन्नमूर्तीनां प्राकृतत्त्वं किं प्रकृतिशब्दितमाया विनैवोत्पन्नत्वमुत सिद्धान्तपक्षे प्रागुक्तरीत्या मायाजन्यत्वं वा ? नाद्य, जन्यस्य सर्वस्यापि मायिकत्वनियमेन तन्मूर्तीनाञ्च मायिकत्वसिद्धेः ।

न च "अवतारेष्वपि हरेर्नैवास्त्यप्राकृता तनुरि" त्यादिवचनैर्बाधितस्स नियम इति वाच्यम् । यज्जन्य तन्मायिकमेवेति न्यायोपबृंहितै "प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया" इति भगवद्गीतावचनादिभि तान्येव वचनानि बाधितानि सन्त्यनुपद सिद्धान्तपक्षेऽभिहितमायिकमूर्तिपराण्येव भवन्तीत्यवश्य वक्तव्यत्वात् । द्वितीयपक्षाश्रयणे तु सिद्धनस्समीहितम् । अत एव नाद्यद्वितीयतृतीयौ, परमेश्वरमूर्तीनां मायिकत्वाभावे प्रमाणाभावादिदोषाणा अनादित्वे सृष्टे प्राक प्रयोजनराहित्यादिदोषाणां मायिकत्वे इष्टापत्तेश्चात्रापि समानत्वात् ।

एतेनानादिसिद्धा एव विष्णुशिवमूर्तयः सृष्ट्यनन्तरमुत्पन्ना इव लोकानां प्रतीतिं जनयन्ति। न तु तासां कदापि स्वेच्छया मायिकोत्पत्तिरप्यस्तीत्येतन्निरस्तम्। परमेश्वरमूर्तीनामनादित्वासिद्धेः प्रदर्शितत्वात्। सृष्ट्यनन्तरमुत्पत्त्यनङ्गीकारे तन्मूर्तीनामसिद्ध्यापत्तेः, श्रुतीतिहासपुराणादिवचनागतेषु तन्मूर्तेरुत्पत्त्याभिधायकपदेषु लक्षणां विनैवोपपत्तौ तदाश्रयणापत्तेश्च।

न च विष्णुशिवमूर्तीनामनादित्वप्रत्यायकेषु "एको ह वै नारायण" इत्यादिषु नारायणादिपदानां "शिव एव केवल" इत्यादिषु शिवादिपदानां च लाक्षणिकत्वगौरवाङ्गीकरणं सिद्धान्तेऽपि समानमिति चेदुच्यते। विष्णुशिवमूर्तीनामुत्पत्त्यभिधायकशब्देषु लक्षणानाश्रयणे सिद्धान्तपक्षे परपक्षे वा तयोरीश्वरत्वध्येयत्वसिद्धौ न किञ्चिद्बाधकमस्ति। तेषु शब्देषु लक्षणाश्रयणन्तु व्यर्थगौरवदोषासिद्ध्यर्थमेवेति पर्यवस्यति। सृष्टेः प्राक् विष्णुशिवयोर्मूर्तिमत्त्वप्रत्यायकेषु "एको ह वै नारायण आसीत्" इत्यादिवाक्येषु स्थितानां नारायणादिशब्दानां शिवादिशब्दानाञ्च लक्षणाश्रयणे न कोऽपि दोषः। लक्षणां विना रूढ्यर्थाश्रयणे तु प्रयोजनरहितार्थाभिधायकत्वापत्त्याप्रामाण्यापत्तिः। अतस्सिद्धं सृष्टेः प्राक् विष्णुशिवयोः मूर्तिराहित्यम्। अपि च मुक्तजीवानां "तन्वभावे सन्ध्यवदुपपत्ते" रित्यादिसूत्रैरशरीरत्वेन चावस्थानाभिधानात् कदापि परमेश्वरस्याशरीरत्वाभावे मुक्तजीवापेक्षया निकर्षापत्तिः। अशरीरतयावस्थानसामर्थ्याभावश्च शरीरश्च यस्य तस्य प्रियाप्रियमनिवार्यमिति न्यायोपबृंहितया

"न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति।
अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" ॥

इति श्रुत्या मुक्तजीवानामशरीरत्वेनावस्थानस्य श्लाघ्यत्वसिद्ध्या परमेश्वरस्य कदाप्यशरीरत्वाभावे मुक्तजीवापेक्षया निकर्षापत्तेरनिवार्यत्वात्। तस्य मुक्तत्वाभावापत्तेश्च अशरीरत्वेनावस्थानरूपमुक्तसामर्थ्याभावात्। अशरीरताया गुणत्वेन तत्सामर्थ्यस्यापेक्षायोगात्।

न चाशरीराणां सुखमपि शरीरवतः परमेश्वरस्य भवतीति न विरोध इति वाच्यम्। मानाभावात्। स्वेच्छयाविर्भूतमायिकशरीरजन्यसुखवत्तया मुक्तजीवानां परमेश्वरस्य च समानत्वाच।

"भोगमात्रसाम्यलिङ्गाच्चे"ति सूत्रकारेण मुक्तजीवानां परमेश्वरस्य च भोगसाम्यानुवादाच्च । शरीरं विना कस्यापि भोगासम्भवात् शरीराभावप्रयुक्तसुखस्य मुक्तजीवानामाधिक्यात् । अतः केनापि कथमप्यपरिहार्यमेव परमेश्वरस्याकाशादिसृष्टेः प्राक् मूर्तिराहित्यम् ।

श्रीमन्नृसिंहाश्रमपूज्यपादैरद्वैतदीपिकायां तृतीयपरिच्छेदान्ते, श्रीमन्मधुसूदनानन्दसरस्वतीश्रीचरणैरद्वैतसिद्धौ चायमर्थो विस्तरेण दर्शितः । निर्णीतश्च ब्रह्ममीमांसायाममूर्तस्य निरवयवस्यैव ब्रह्मणो वियदादिसकलजगत्कारणत्वम् । तत्रेक्षत्यधिकरणे "यदप्युक्तं प्रागुत्पत्तेर्ब्रह्मणश्शरीरादिसम्बन्धमन्तरेणेक्षितृत्वमनुपपन्नमि"ति भाष्येणेश्वरस्यापि शरीरादिसम्बन्धाभावनिबन्धनां प्रधानकारणवादिकृतामीक्षितृत्वासम्भवशङ्कामनूद्य, तन्निराकरणसन्दर्भे "अपि चाविद्यादिमतः संसारिणश्शरीराद्यपेक्षा ज्ञानोत्पत्तिः स्यात्, न ज्ञानप्रतिबन्धकारणरहितस्येश्वरस्ये"त्युक्त्वा "मन्त्रौ चेमावीश्वरस्य शरीराद्यनपेक्षतामनावरणज्ञानतां च दर्शयत" इति चोक्त्वा,

"न तस्य कार्यं करणं च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते ।
परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च" ॥ इति ॥

"अपाणिपादो जवनो ग्रहीता
पश्यत्यचक्षुस्स शृणोत्यकर्णः ।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता
तमाहुरग्र्यं पुरुषं महान्तम्" ॥ इति चेति

श्वेताश्वतरमन्त्रद्वयमुदाहृतमित्यस्मिन्नधिकरणेऽशरीरस्यैव ब्रह्मणो जगत्कारणत्वप्रतिष्ठापनं विस्पष्टमेव । एवं द्वितीयाध्याये प्रथमपादे "उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धी"त्यधिकरणम् । "देवादिवदपि लोके" इति च गुणसूत्रम् । तदनन्तरं "कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वे"त्यधिकरणम् । "तत्रोत्तराधिकरणे चेतनमेकमद्वितीयं ब्रह्म क्षीरादिवद्देवादिवच्चानपेक्ष्य बाह्यसाधनं स्वयं परिणममानं जगतः कारणमिति स्थित"मिति

भाष्येण पूर्वाधिकरणसिद्धोऽर्थोऽनूदितः । तत्र चाद्वितीयब्रह्मान्यानिरपेक्षमेव जगत्कारणमिति स्फुटं दर्शितम् । "कृत्स्नप्रसक्ति" रिति पूर्वपक्षसूत्रे तद्व्याख्याने च तदनन्तरं "श्रुतेस्तु शब्दमूलत्वा" दिति सिद्धान्तसूत्रे तत्सूत्रविषयके "तावानस्य महिमा ततो ज्यायाँश्च पूरुषः । पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवी" त्यादिश्रुतिप्रदर्शनपूर्वकं सद्वृत्ते? "तस्मादस्त्यविकृतं ब्रह्म । न च निरवयवत्वशब्दकोपोऽस्ति । श्रूयमाणत्वादेव निरवयवत्वस्याप्यभ्युपगम्यमानत्वात् । शब्दमूलश्च ब्रह्म शब्दप्रमाणकं नेन्द्रियादिप्रमाणकम् । तद्यथाशब्दमभ्युपगन्तव्यम् । शब्दश्चोभयमपि ब्रह्मणः प्रतिपादयति, अकृत्स्नप्रसक्तिं निरवयवत्वञ्चे" त्यादिभाष्ये च स्फुटतयैवोक्तं निरवयवस्य ब्रह्मणः कारणत्वम् । तदनन्तरं तस्मिन्नेवाधिकरणे "आत्मनि चैवं विचित्राश्च हि" ति गुणसूत्रे "अपि च नैवात्र विवदितव्यम् । कथमेकस्मिन्ब्रह्मणि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिः स्यादिति । यत आत्मन्यप्येकस्मिन् स्वप्नदृशि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिः पठ्यते" इत्यादिभाष्ये कण्ठरवेणैवोक्तं निरवयस्यैव ब्रह्मणः कारणत्वम् । एवं "सर्वोपेता च तद्दर्शना" दित्यधिकरणे स्फुटं एवायमर्थः । तस्मिन्नेवाधिकरणे "विकरणत्वान्नेति चेत्तदुक्त" मिति गुणसूत्रेण, तत्सूत्रविषयकेण स्यादेतत् । विकरणां परां देवतां शास्ति शास्त्रम् । 'अचक्षुष्कमश्रोत्रमवागमना' इत्येवञ्जातीयकम् । कथं सा सर्वशक्तियुक्तापि सती कार्याय प्रभवेत् । देवादयो हि चेतनास्सर्वशक्तियुक्ता अपि सन्त आध्यात्मिककार्यकरणसम्पन्ना एव तस्मै तस्मै कार्याय प्रभवन्तो विज्ञायन्ते । कथञ्च नेति नेतीति प्रतिषिद्धसर्वविशेषाया देवतायास्सर्वशक्तियोगस्सम्भवेदिति चेत् । यदत्र वक्तव्यं तत्पुरस्तादेवोक्तम् । श्रुत्यवगाह्यमेवेदमतिगम्भीरं ब्रह्म न तर्कावगाह्यम् । न च यथैकस्य सामर्थ्यं दृष्टं तथान्यस्यापि सामर्थ्येन भवितव्यमिति नियमोऽस्तीति । प्रतिषिद्धसर्वविशेषस्यापि ब्रह्मणस्सर्वशक्तियोगस्सम्भवतीत्येतदप्यविद्याकल्पितरूपभेदोपन्यासेनोक्तमेव । तथा च शास्त्रम्—

"अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुस्स शृणोत्यकर्णः" ।

इत्यकरणस्यापि "ब्रह्मणस्सर्वसामर्थ्ययोगं दर्शयती"ति भाष्येण च सत्यकरणरहितस्यैव ब्रह्मणो जगत्कारणत्वं स्थूणानिखनन्यायेन सम्यक् प्रतिष्ठापितम्। तस्मान्मूर्तिरूपस्य कस्यापि वियदादिजगत्कारणत्ववादो वैदिकानामसम्मत एवेति सिद्धत्वेन "एको ह वै नारायण आसीदि"-त्यत्र वियदादिसकलजगदुपादानकारणत्वेन श्रुतो नारायणो बिम्बचैतन्यरूप एवेति सिद्धत्वेन बिम्बचैतन्यस्य कस्माच्चिदुत्पत्तिकल्पनमनोरथोऽप्युपहासार्ह एव।

एतेन च शिवतत्त्वविवेके एतन्महोपनिषदुपबृंहणत्वेनोदाहृतमत्स्य-पुराणवचनानां तात्पर्याभिधानप्रस्तावेऽभिहितम्—"अस्मत्पक्षे तु तमोऽ-धिष्ठातुरीश्वरात्स्वयम्भुव प्रादुर्भावोक्त्या ततो भेदप्रसक्तिः। जीवस्य स्वयम्भूत्वानुपपत्तेस्तस्यापीश्वरभावेऽनेकेश्वरवाद इति शङ्कावारणाय तदभावश्च वक्तव्य इति तमोऽधिष्ठाता परमेश्वर एवोपाधिविशेषकृतेन नारायणमू-र्त्यात्मना रूपान्तरेण सर्गादावभिव्यक्त इत्येतदभिप्रायोऽनन्तरश्लोकसङ्गच्छ-तेतरा" मित्यादिकं निरस्तम्। तत्र नारायणमूर्त्यात्मनाविर्भूतःशिवः किं श्रीमूर्तिरूपः, अथ वा बिम्बचैतन्यरूपः। नाद्यः—मूर्तिरूपस्य कस्यापि वियदादि-सर्वकारणत्वासम्भवेन मूर्तिरूपनारायणस्य स्रष्टृत्वोक्तेः तत्स्रष्टृत्व मूर्तिरूपशिवे पर्यवस्यतीत्युक्तेश्चापहास्यत्वात्। न द्वितीयः—बिम्बचैतन्यादुत्पन्नत्वेऽपि मूर्तिरूपनारायणस्य वियदादिस्रष्टृत्वासम्भवस्य समानत्वात्। तत्पक्षद्वयेऽपि नारायणस्येश्वरताया भवद्भिरपि सम्यगङ्गीकृतत्वेन जीवस्यापि ज्ञानबलैश्वर्या-दिनेश्वरसाम्यमस्त्येव। तच्चाविद्ययावृतमिति दर्शितत्वेनाविद्यावरणत्वे जीवत्वापत्त्या तदावरणरहितस्य श्रीमूर्तिरूपनारायणस्य श्रीमूर्तिरूपपरम-शिवसमानत्वमनिवार्यमेवेति भवदाशयस्य शिवानिन्दकानामनिष्टं वक्तव्य-मित्याशयेनैव मत्रद्भिर्विष्णोरपकर्ष उक्त इत्यस्य च सिद्धत्वेऽपीदानीन्तनाः पापोहतचित्ता केचन विष्णोरपकर्ष एव भवत्तात्पर्यमवगच्छन्तो नरकं गच्छन्ति।

किञ्च "न ब्रह्मा नेशान" इत्यत्र नेशान इति परमशिवस्य आका-शादिसकलसृष्टेः प्रागविद्यमानत्वाभिधानेन तथा सृष्ट्यनन्तरं "अथ पुनरेव नारायण" इत्यादिना "महतां देवानां महादेव" इत्यन्तेन सन्दर्भेण

नारायणललाटात्तस्योत्पत्त्यभिधानेन तथा प्रयोजनाभावेन सृष्टेः प्राक् तस्याविद्यमानत्वं सिद्ध्यति । तच्चाविद्यमानत्वं मूर्तिरूपेणैव, नेशान इत्यत्रेशानशब्दस्य श्रीमूर्तिरूपशिवे रूढत्वात् । सृष्ट्यनन्तरं तदीशानस्य "त्र्यक्षश्शूलपाणिः पुरुषो जायत" इति श्रीमूर्तिरूपस्यैवोत्पत्त्यभिधाने-नाप्युक्तार्थस्य सिद्धत्वात् । चैतन्यरूपेण कस्यापि कदाप्यविद्यमानत्वासम्भवाच्च । शिवस्य चिद्घनचैतन्यरूपेणानादिताया अथर्वशिखाश्वेताश्वतरादिषु सुप्रसिद्धत्वात् । चिद्घनचैतन्यरूपस्य तस्य कृतमायस्य परमशिवस्य नित्यमुक्तत्वेनावाप्तसमस्तकामत्वेन कदापि भोगेच्छासम्भावनाया अपि प्रसक्त्यभावेन तदानीमुपासकस्याभावेन च तत्परमशिवस्य तत्सृष्टेः प्राक् श्रीमूर्तिरूपेणावस्थाने प्रयोजनाभावस्य सिद्धत्वाच्च परमशिवस्य श्रीमूर्तिरूपेणानादित्वमत्यायकानि पुराणादिवचनानि चिद्घनचैतन्यरूपेणानादित्वपराणीति तेषां वचनानामवश्यं नेयत्वात् । अन्यथा नेशान इत्यादिश्रुतिविरुद्धानां विरोधाधिकरणन्यायेनाप्रामाण्यापत्तेः ।

न च तथाप्ययं शिवोऽनीश्वर एव, तथात्वे बाधकाभावात् तस्यात्रोत्पत्त्यभिधानाच्चेति वाच्यम् । तस्यात्र सर्वेश्वरत्वाभिधानेन तथात्वे बाधकस्य सत्त्वात् । तस्यात्र नेशान इति वाक्यस्येशानश्रुत्योत्पत्त्यभिधायकवाक्यस्थेशानश्रुतेरङ्गुष्ठमात्रपुरुषस्य सर्वेश्वरत्वपरत्वसमर्थनात् । अत्रैव "महतां देवानां महादेव" इति तस्योत्पत्त्यभिधायकवाक्यगतेन महादेवेभ्योऽपि महादेवत्वलिङ्गेन सर्वेश्वरतायास्सिद्धत्वाच्च तस्योत्पत्त्यभिधायकवाक्यापेक्षया स्थानरूपादि (¹) समभिव्याहारापेक्षया च तस्य सर्वेश्वरत्वपरश्रुत्योर्लिङ्गस्य च प्रबलत्वेन तदुक्तोत्पत्तेरभिनयरूपत्वसिद्ध्या तस्य सर्वेश्वरत्वसिद्धेर्निष्प्रत्यूहत्वात् । श्रीमूर्तिरूपशिवनानात्वस्य श्रुतिष्वप्रसिद्धत्वाच्च । अत परमशिवस्यास्यामुपनिषदि "न ब्रह्मा नेशान" इत्यादिना सृष्टेः प्राक् श्रीमूर्तिरूपेणाविद्यमानत्वं सिद्ध्यत्येव । तथा श्रीमूर्तिरूपस्याकाशाद्युपादानकारणत्वासम्भवेन उक्तरीत्या प्रयोजनाभावेन च नारायणस्याकाशादिसर्वकारणीभूतश्रीमूर्तिरूपेणाकाशादिसृष्टेः प्राक् अविद्यमानत्वं सिद्धमेवेति सृष्टेः प्रागविद्यमानयोरीशाननारायणयोः कार्यकारणभावकल्पनमत्यन्तापहास्यमेव ।

इत्यकरणस्यापि "ब्रह्मणस्सर्वसामर्थ्ययोगं दर्शयती"ति भाष्येण च सत्यकरणरहितस्यैव ब्रह्मणो जगत्कारणत्व स्थूणानिखनन्यायेन सम्यक् प्रतिष्ठापितम् । तस्मान्मूर्तिरूपस्य कस्यापि वियदादिजगत्कारणत्ववादो वैदिकानामसम्मत एवेति सिद्धत्वेन "एको ह वै नारायण आसीदि"-त्यत्र वियदादिसकलजगदुपादानकारणत्वेन श्रुतो नारायणो बिम्बचैतन्यरूप एवेति सिद्धत्वेन बिम्बचैतन्यस्य कस्माचिदुत्पत्तिकल्पनमनोरथोऽप्युपहासार्ह एव ।

एतेन च शिवतत्त्वविवेके एतन्महोपनिषदुपबृंहणत्वेनोदाहृतमत्स्य-पुराणवचनानां तात्पर्याभिधानप्रस्तावेऽभिहितम्—"अस्मत्पक्षे तु तमोऽ-धिष्ठातुरीश्वरात्स्वयम्भुव प्रादुर्भावोक्त्या ततो भेदप्रसक्ति । जीवस्य स्वयं ूत्वानुपपत्तेस्तस्यापीश्वरभावेऽनेकेश्वरवाद इति शङ्कावारणाय तदभावश्च वक्तव्य इति तमोऽधिष्ठाता परमेश्वर एवोपाधिविशेषकृतेन नारायणमू-र्त्यात्मना रूपान्तरेण सर्गादावभिव्यक्त इत्येतदभिप्रायोऽनन्तरश्लोकसङ्गच्छ-तेतग" मित्यादिकं निरस्तम् । तत्र नारायणमूर्त्यात्मनाविर्भूताशेत्व किं श्रीमूर्तिरूप , अथ वा बिम्बचैतन्यरूपः । नाद्य —मूर्तिरूपस्य कस्यापि वियदादि सर्वकारणत्वासम्भवेन मूर्तिरूपनारायणस्य स्रष्टृत्वोक्तेः तत्स्रष्टृत्व मूर्तिरूपशिवे पर्यवस्यतीत्युक्तेश्चापहासार्हत्वात् । न द्वितीय —बिम्बचैतन्यादुत्पन्नत्वेऽपि मूर्तिरूपनारायणस्य वियदादिस्रष्टृत्वासम्भवस्य समानत्वात् । तत्पक्षद्वयेऽपि नारायणस्येश्वरताया भवद्भिरपि सम्यगङ्गीकृतत्वेन जीवस्यापि ज्ञानबलैश्वर्या-दिनेश्वरसाम्यमस्त्येव । तच्चाविद्ययावृतमिति दर्शितत्वेनाविद्यावरणत्वे जीवत्वापत्त्या तदावरणरहितस्य श्रीमूर्तिरूपनारायणस्य श्रीमूर्तिरूपपरम-शिवसमानत्वमनिवार्यमेवेति भवदाशयस्य शिवानिन्दकानामनिष्ट वक्तव्य-मित्याशयेनैव भवद्भिर्विष्णोरपकर्ष उक्त इत्यस्य च सिद्धत्वेऽपीदानीन्तनाः पापोहतचित्ता केचन विष्णोरपकर्ष एव भवत्तात्पर्यमवगच्छन्तो नरक गच्छन्ति ।

किञ्च "न ब्रह्मा नेशान" इत्यत्र नेशान इति परमशिवस्य आका-शादिसकलसृष्टेः प्रागविद्यमानत्वाभिधानेन तथा सृष्ट्यनन्तर "अथ पुनरेव नारायण" इत्यादिना "महता देवाना महादेव" इत्यन्तेन सन्दर्भेण

नन्वेवमपि दीक्षितैर्नारायणस्यास्यामुपनिषद्युत्पन्नत्वं कल्पितम् । तदुक्तमेव । अथर्वशिरःप्रभृतिषु शिवस्य विश्वचैतन्यरूपत्वश्रवणेन अस्यामुपनिषदि सृष्टिप्रकरणे "ध्यानान्तस्थस्य ललाटात्स्वेदोऽपत" दिति नारायणस्य ललाटाभिधानात्तस्य मूर्तिरूपतायासिद्धत्वेन च तस्मिन्नुक्तजन्मत्वादिकमपूर्तिरूपे तस्मिन्नतत्प्रभवत्सन् जगत्कारणत्वेन सह विश्वचैतन्यरूपशिव एव पर्यवस्यति । मूर्तिरूपेऽभिहितं विश्वचैतन्यरूपे पर्यवस्यतीत्यस्य सर्वसंमतत्वात् ।

उक्तञ्च पराशरोपपुराणे—

यानि वेदान्तवाक्यानि तानि सर्वाणि सत्तम ।
विश्वाधिकपराण्येव नैव विश्वपराणि वै ॥

तथा स्मृतिपुराणानि निरुक्तादीनि चास्तिक ।
शास्त्रान्तराणि तर्काश्च श्रुत्यनुग्राहकास्तथा ॥

विना साक्षाच्छिवं साम्बं प्रमाणान्यतिवलान्यपि ।
विश्वाधिकतया नान्यं प्रवदन्ति कदाचन ॥

माहेश्वरपुराणानि समस्तानि महामुने ।
असाधारणया मूर्त्या नाम्ना साधारणेन तु ॥
वदन्ति परमं तत्त्वं शिवं साम्बं त्रिलोचनम् ।
वैष्णवानि पुराणानि समस्तानि महामुने ॥

त्रिमूर्तीनां हरेर्नाम्ना मूर्त्या तस्य परम्परम् ।
प्रवदन्ति पुराणे द्वे ब्राह्ममूर्त्यानया द्विशा ॥

आग्नेयन्तु तथा सौरं न चैवं पण्डितोत्तम ।
अष्टादश पुराणानां निष्ठा कार्या महेश्वरः ॥

गुणाभिमानिनेनैव ब्रह्मविष्णुमहेश्वराः ।
वैष्णवानि पुराणानि त्रिमूर्तीनां हरेरपि ॥
तदेतस्य तदंशस्य वैभवन्तु वदन्ति हि ।
योऽपकर्षो हरेर्दृष्टस्त्वम्भवेष्वपिलेष्वपि ॥

अपि च नारायणस्योत्पत्त्यङ्गीकारेऽस्यामेवोपनिषदि "शाश्वतं शिव-मच्युतम्" इत्यत्र शाश्वतमिति "अनन्तमव्यय"मित्यत्रानन्तमिति च विशेषण-द्वयविरोधः। शाश्वतशब्दस्य सर्वकालावस्थायित्वार्थकत्वेन प्रसिद्धत्वात्। तथानन्तशब्दस्य त्रिविधपरिच्छेदशून्यत्वार्थकत्वेन प्रसिद्धतया तेनापि कालत परिच्छेदराहित्यात्मना सदावस्थानाभिधानात् सदावस्थायिनश्चोत्पत्त्ययोगात्। एवं तैत्तिरीये नारायणानुवाके 'शाश्वतं शिवमच्युतं' मित्यत्र शाश्वतमिति तत्रैव "अनन्तमव्यय"मित्यत्रानन्तमिति च नारायणस्यास्यामुपनिषदि उक्तमेवोक्तम्। तथा सुबालोपनिषदि पञ्चमखण्डे "अजरममृतमभयमशोक-मनन्त"मित्यस्य वाक्यस्य चतुर्दशवारमाम्नाततयानन्तमिति चतुर्दशवारमनन्त-त्वमुक्तम्। नवमखण्डेऽपि "यस्तुर्यमेवास्तमिति तदमृतमभयमशोकमनन्तं निर्बीजमेवाप्येती"ति नारायणस्याकारणकत्वं चतुर्दशवारमुक्तम्। तत्रैव तृतीय-खण्डे "अव्ययं महान्तं बृहन्तमजं"मित्यत्राजमित्यस्याजत्वमुक्तम्। सप्तम-खण्डे "अन्तःशरीरे निहितो गुहायामज एको नित्य" इत्यत्राज इति पुनश्चाजत्वमुक्तमिति तैत्तिरीयादिगतबहुवचनविरोधश्च। एवमुत्पत्त्यङ्गीकारे उत्पत्तिमतो नाशस्यावश्यकत्वेन नाशाभावप्रतिपादके "विश्वतः परमं नित्यं"मित्यत्र नित्यमिति "शाश्वतं शिवमच्युतं"मित्यत्र शाश्वतमिति, अच्युत-मिति अनन्तमव्ययमित्यत्रानन्तमित्यव्ययमिति च, इत्येतैर्विशेषणैर्विरोधः।

एवं तैत्तिरीयनारायणानुवाकगतैरेतैः पञ्चविशेषणैर्विरोधश्च। एवं सुबा-लोपनिषदि अष्टाविंशतिवारमाम्नातमित्युदाहृतेन "अजरममृतमभयमशोकमन-न्त"मिति वाक्येनाष्टाविंशतिवारं तस्याजरत्वामृतत्वाभयत्वाशोकत्वानन्तत्वा-न्युक्तानि। तद्गततृतीयसप्तमवाक्ययोरुदाहृतयोरव्ययमिति नित्यमिति च तस्याव्ययत्वनित्यत्वेऽभिहिते। तत्रैव पञ्चमखण्डे "यस्यान्नमिदं सर्वं न च योऽन्नं भवती"त्यत्र यस्यान्नमिति तस्य सर्वसंहर्तृत्वं, न च योऽन्नमिति असंहार्यत्वञ्चोक्तम्। एवं नारायणोपनिषदि द्वितीयाध्याये "अथ नित्यो देव एको नारायण" इत्यत्र नित्य इति नित्यः। तत्रैव "अथ नित्यो निष्फल" इत्यत्रापि नित्य इति, तत्रैव "प्रयाति परमं पारं विष्णुत्वाख्यं पदमव्यय"मित्यत्राव्ययमिति च नारायणे नित्यत्वमुक्तमित्येतदुपनिषद्द्वय-गतबहुवचनविरोधश्च।

नन्वेवमपि दीक्षितैर्नारायणस्यास्यामुपनिषद्यश्रुतोत्पन्नत्वं कल्पितम् । तदुक्तमेव । अथर्वशिरःप्रभृतिषु शिवस्य विश्वचैतन्यरूपत्वश्रवणेन अस्यामुपनिषदि सृष्टिप्रकरणे "ध्यानान्तस्थस्य ललाटात्स्वेदोऽपत" दिति नारायणस्य ललाटाभिधानात्तस्य मूर्तिरूपतायाः सिद्धत्वेन च तस्मिन्नुक्ताजत्वादिकमपूर्तिरूपे तस्मिन्नसम्भवत्सन् जगत्कारणत्वेन सह विश्वचैतन्यरूपशिव एव पर्यवस्यति । मूर्तिरूपेऽभिहितं विश्वचैतन्यरूपे पर्यवस्यतीत्यस्य सर्वसंमतत्वात् ।

उक्तश्च पराशरोपपुराणे—

यानि वेदान्तवाक्यानि तानि सर्वाणि सत्तम ।
विश्वाधिकपराण्येव नैव विश्वपराणि वै ॥

तथा स्मृतिपुराणानि निरुक्तादीनि चास्तिक ।
शास्त्रान्तराणि तर्काश्च श्रुत्यनुग्राहकास्तथा ॥

विना साक्षाच्छिवं साम्बं प्रमाणान्यखिलान्यपि ।
विश्वाधिकतया नान्यं प्रवदन्ति कदाचन ॥

माहेश्वरपुराणानि समस्तानि महामुने ।
असाधारणया मूर्त्या नाम्ना साधारणेन तु ॥

वदन्ति परमं तत्वं शिवं साम्बं त्रिलोचनम् ।
वैष्णवानि पुराणानि समस्तानि महामुने ॥

त्रिमूर्तीनां हरेर्नाम्ना मूर्त्या तस्य परम्पदम् ।
प्रवदन्ति पुराणे द्वे ब्राह्ममूर्त्यानया दिशा ॥

आग्नेयञ्च तथा सौरं न चैवं पण्डितोत्तम ।
अष्टादश पुराणानां निष्ठा काष्ठा महेश्वरः ॥

गुणाभिमानिनैनैव ब्रह्मविष्णुमहेश्वराः ।
वैष्णवानि पुराणानि त्रिमूर्तीनां हरेरपि ॥

सर्वेशस्य तदंशस्य वैभवञ्च वदन्ति हि ।
योऽपकर्षो हरेर्दृष्टस्साम्बवेष्वखिलेष्वपि ॥

पुराणेषु हरेस्साक्षान्मूलभूतस्य सत्तम ।
वैष्णवेषु पुराणेषु योऽपकर्षस्तु दृश्यते ॥

रुद्रांशस्य हरस्यास्य विभूतेरेव केवलम् ।
उत्कर्षो य' पुराणेषु दृश्यते शाम्भवेषु च ॥

रुद्रस्यासौ स्वरूपेण मुने तत्त्वात्मनापि च ।
उत्कर्षो य पुराणेषु दृश्यते वैष्णवेषु च ॥

असौ तत्त्वात्मना विष्णोर्न स्वरूपेण सत्तम ।
एव पुराणयोस्साक्षाद्ब्रह्मणा दर्शिता च दिक् ॥

पावकस्य पुराणे च तथा सौरे च सत्तम ।
आधिक्य देवदेवस्य शिवस्य परमात्मन. ॥

अविज्ञाय नरा विष्णु वरिष्ठ मन्वते भ्रमात्" ॥

इतीति चेन्न । आकाशादिसकलजगत्कर्ता नारायण एवेत्येतत्तात्पर्य-पुरस्सरमेतदुपनिषदा दीक्षितैश्चाभिहितमित्यस्य सिद्धत्वेन जगत्प्रति बिम्ब-चैतन्यरूपोऽपि नारायणजनकश्शिव. घट प्रति कुलालजनक इवान्यथा-सिद्ध इति प्रागुक्तदोषतादवस्थ्यात् ।

ननु तर्हि वामदेवादिषूक्तं सार्वात्म्यादिक बिम्बरूपपरमात्मनि पर्यव-स्यतीति सिद्धान्तभङ्गापत्तिरिति चेदुच्यते । बिम्बचैतन्यरूपपरमात्मन एवा-काशादिसर्वकर्तृत्व सार्वात्म्यञ्च न मूर्तिरूपस्य शिवस्य वेति सिद्धत्वेन, मूर्तिरूपे जीवे वाभिहित जगत्कारणत्वादिक बिम्बचैतन्यरूपे पर्यवस्यती-त्येतद्युक्तमेव । मूर्तिरूपस्य शिवस्य वा जगत्कर्तृत्वादेरभावात् । मूर्तिरूप-नारायणस्य जगत्कर्तृत्वमङ्गीकृत्य शिवस्य तत्कारणत्वाङ्गीकरण त्वन्याय्यमेव । बिम्बचैतन्यरूपस्यापि शिवस्य तत्कर्तृत्वाभावात् ।

न च "आत्मन आकाशस्सम्भूत, आकाशाद्वायु"रित्यत्र यथाका-शविशिष्टपरमात्मन आकाशादुत्पन्नवायु प्रति कारणत्व, तथा नारायण-विशिष्टशिवस्य नारायणादुत्पन्न जगत्प्रति कारणत्व युक्तमेवेति वाच्यम् ।

अचेतनस्थले तथात्वेऽपि चेतनेन नारायणेन निर्मितजगत्प्रति तत्समानचेतनस्य शिवस्य तज्जनकत्वेन रूपेण कारणत्वे चेतनेन दण्डचक्रादिसहितेन कुलालेन निर्मितघटं प्रति तत्समानचेतनस्य तज्जनकस्य तज्जनकत्वेन रूपेण कारणत्वापत्तेरनिवार्यत्वात्। शिवनारायणयोरुभयोरीश्वरतायास्समानत्वात्। कुलालापेक्षया तज्जनकस्यात्यन्तबलवत्तरत्वेऽपि तज्जनकत्वेन घटं प्रति कारणत्वासम्भवात्।

किञ्च तथाङ्गीकारे शिवनारायणयोरुभयोर्जगत्कारणत्वापत्त्या ईश्वरनानात्वापत्तिः। ईश्वरस्य सतो दौर्बल्यं न सम्भवतीत्यर्थस्यासकृदुक्तत्वया एकः प्रबल इतरो दुर्बलस्तदधीनेताहशेश्वरनानात्वञ्च न दोष इति कल्पनस्य त्वसम्भवात्। शिवनारायणयोरुभयोर्जगत्कारणत्वे जगत उपादानकारणं निमित्तकारणञ्च एक एव परमेश्वर इति वेदान्तसिद्धान्तविरोधापत्तेश्च। यथा आत्मनो मायाविशिष्टस्य सतो जगत्कारणत्वे उभयोः कारणतामादाय कारणनानात्वदोषो नापतति, तथा आकाशविशिष्टस्य सतो वायु प्रति कारणत्वेऽपि मायाया इवाकाशस्याप्यचेतनत्वेनात्माकाशयोरुभयो कारणत्वमादाय कारणनानात्वदोषो नापतति। चेतनस्यैकस्यैव कारणत्वात्। शिवस्य नारायणविशिष्टस्य सतः कारणत्वे उभयोरपि चेतनत्वेन कारणनानात्वदोषं आपतत्येवेति व्यक्तत्वात्।

किञ्चात्र पति विश्वस्येति तद्विश्वमुपजीवतीति च जगत स्थितिहेतुत्वं विश्वगुप्तिमिति च संहर्तृत्वञ्चोक्तम्। सृष्टिकर्तृत्वाभिधानन्तु दर्शितमेवेति अस्या महोपनिषदि नारायणस्योक्तं जगदुदयस्थितिलयहेतुत्वम्। तस्य यदि सर्वेश्वरत्वसाधकाभावस्तदा "जन्माद्यस्य यत" इत्यादिब्रह्माधिकरणविरोधस्स्यात्। ब्रह्मधिकरणेषु "यतो वा इमानि भूतानि जायन्त" इत्यादिश्रुत्युक्तमाकाशादिकारणत्वं अयन्तमीश्वरस्त्वाम्ब्रह्मेत्युक्तत्वात्।

अपि चास्यामुपनिषदि नारायणस्य "विश्वं नारायण"मित्यादिना सार्वात्म्यं "अक्षरं नित्य"मित्यादिना नित्यत्वं, "परमं प्रभुमात्मेश्वर"मित्यादिना सर्वेश्वरत्वं, विश्वतः परममिति विश्वाधिकत्वं, शाश्वतमिति सर्वकालावस्थायित्वं, नारायण महाज्ञेयमिति सर्वोत्कृष्टज्ञेयत्वं, परायणमिति सर्वैः

पुराणेषु हरेस्साक्षान्मूलभूतस्य सत्तम ।
वैष्णवेषु पुराणेषु योऽपकर्षस्तु दृश्यते ॥

रुद्रांशस्य हरस्यास्य विभूतेरेव केवलम् ।
उत्कर्षो यः पुराणेषु दृश्यते शाम्भवेषु च ॥

रुद्रस्यासौ स्वरूपेण मुने तत्त्वात्मनापि च ।
उत्कर्षो यः पुराणेषु दृश्यते वैष्णवेषु च ॥

असौ तत्त्वात्मना विष्णोर्न स्वरूपेण सत्तम ।
एवं पुराणयोस्साक्षाद्ब्रह्मणा दर्शिता च दिक् ॥

पावकस्य पुराणे च तथा सौरे च सत्तम ।
आधिक्यं देवदेवस्य शिवस्य परमात्मनः ॥

अविज्ञाय नरा विष्णुं वरिष्ठं मन्यते भ्रमात्" ॥

इतीति चेन्न । आकाशादिसकलजगत्कर्ता नारायण एवेत्येतत्तात्पर्य-पुरस्सरमेतदुपनिषदा दीक्षितैश्चाभिहितमित्यस्य सिद्धत्वेन जगत्प्रति बिम्ब-चैतन्यरूपोऽपि नारायणजनकश्शिवः घटं प्रति कुलालजनक इवान्यथा-सिद्ध इति प्रागुक्तदोषतादवस्थ्यात् ।

ननु तर्हि वामदेवादिपूक्तं सार्वात्म्यादिकं बिम्बरूपपरमात्मनि पर्यव-स्यतीति सिद्धान्तमङ्गापत्तिरिति चेदुच्यते । बिम्बचैतन्यरूपपरमात्मन एवा-काशादिसर्वकर्तृत्वं सार्वात्म्यञ्च न मूर्तिरूपस्य शिवस्य चेति सिद्धत्वेन, मूर्तिरूपे जीवे चाभिहितं जगत्कारणत्वादिकं बिम्बचैतन्यरूपे पर्यवस्यती-त्येतद्युक्तमेव । मूर्तिरूपस्य शिवस्य वा जगत्कर्तृत्वादेरभावात् । मूर्तिरूप-नारायणस्य जगत्कर्तृत्वमङ्गीकृत्य शिवस्य तत्कारणत्वाङ्गीकरणं त्वन्याय्यमेव। बिम्बचैतन्यरूपस्यापि शिवस्य तत्कर्तृत्वाभावात् ।

न च "आत्मन आकाशस्सम्भूतः, आकाशाद्वायु"रित्यत्र यथाका-शविशिष्टपरमात्मन आकाशादुत्पन्नवायुं प्रति कारणत्वं, तथा नारायण-विशिष्टशिवस्य नारायणादुत्पन्नं जगत्प्रति कारणत्वं युक्तमेवेति वाच्यम् ।

अचेतनस्थले तथात्वेऽपि चेतनेन नारायणेन निर्मितजगत्प्रति तत्समानचेतनस्य शिवस्य तज्जनकत्वेन रूपेण कारणत्वे चेतनेन दण्डचक्रादिसहितेन कुलालेन निर्मितघटं प्रति तत्समानचेतनस्य तज्जनकस्य तज्जनकत्वेन रूपेण कारणत्वापत्तेरनिवार्यत्वात्। शिवनारायणयोरुभयोरीश्वरतायास्समानत्वात्। कुलालापेक्षया तज्जनकस्यात्यन्तबलवत्तरत्वेऽपि तज्जनकत्वेन घटं प्रति कारणत्वासम्भवात्।

किञ्च तथाङ्गीकारे शिवनारायणयोरुभयोर्जगत्कारणत्वापत्त्या ईश्वरनानात्वापत्तिः। ईश्वरस्य सतो दौर्बल्यं न सम्भवतीत्यर्थस्याप्रकदुक्तत्वया एकः प्रबल इतरो दुर्बलस्तदधीनैतादृशेश्वरनानात्वञ्च न दोष इति कल्पनस्य त्वसम्भवात्। शिवनारायणयोरुभयोर्जगत्कारणत्वे जगत उपादानकारणं निमित्तकारणञ्च एक एव परमेश्वर इति वेदान्तसिद्धान्तविरोधापत्तेश्च। यथा आत्मनो मायाविशिष्टस्य सतो जगत्कारणत्वे उभयोः कारणतामादाय कारणनानात्वदोषो नापतति, तथा आकाशविशिष्टस्य सतो वायु प्रति कारणत्वेऽपि मायाया इवाकाशस्याप्यचेतनत्वेनात्माकाशयोरुभयोः कारणत्वमादाय कारणनानात्वदोषो नापतति। चेतनस्यैकस्यैव कारणत्वात्। शिवस्य नारायणविशिष्टस्य सतः कारणत्वे उभयोरपि चेतनत्वेन कारणनानात्वदोष आपतत्येवेति व्यक्तत्वात्।

किञ्चात्र पाति विश्वस्येति तद्विश्वमुपजीवतीति च जगत स्थितिहेतुत्वं विश्वमुगिति च संहर्तृत्वञ्चोक्तम्। सृष्टिकर्तृत्वाभिधानन्तु दर्शितमेवेति अरया महोपनिषदि नारायणस्योक्तं जगदुदयस्थितिलयहेतुत्वम्। तस्य यदि सर्वेश्वरत्वसाधकोभावस्तदा "जन्माद्यस्य यत" इत्यादिब्रह्माधिकरणविरोधस्स्यात्। तद्विषकरणेषु "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुत्युक्तमाकाशादिकारणत्व अचरुपीश्वरत्वान्द्भमित्युक्तत्वात्।

अपि चास्यामुपनिषदि नारायणस्य "विश्वं नारायण"मित्यादिना सार्वात्म्यं "अक्षरं नित्य"मित्यादिना नित्यत्वं, "परमं प्रभुमात्मेश्वर"मित्यादिना सर्वेश्वरत्वं, विश्वतः परमामिति विश्वाधिकत्वं, शाश्वतमिति सर्वकालावस्थायित्वं, नारायण महाज्ञेयमिति सर्वोत्कृष्टज्ञेयत्वं, परायणमिति सर्वैः

भाष्यस्थानत्वं, नारायणपरं ब्रह्मेत्यादिना परब्रह्मत्वं परतत्त्वत्वं परंज्योती-रूपत्वं परमात्मत्वं "यच्च किञ्चिज्जगत्यस्मिन्नि"त्यादिना सर्वव्यापकत्वमनन्त-मिति त्रिविधपरिच्छेदराहित्यं विश्वशम्भुवमिति सकलसुखयितृत्वञ्चोक्तमित्ये-तैरन्यैश्च सर्वेश्वरत्वबोधकैर्लिङ्गैर्वाक्यैश्च नारायणस्य सर्वेश्वरत्वनिर्धारणा-भावे "अन्तस्तद्धर्मोपदेशा"दित्याद्यधिकरणेषु येषु येषु आदित्याद्यन्तर्वर्ति-हिरण्मयपुरुषादीनां किमयं जीवो वा परमात्मा वेति संशयपूर्वकं परमात्मत्वं निर्धारितं तेषां सर्वेषामधिकरणानां भङ्गापत्तिः। अन्तस्तद्धर्मोपदेशादित्यधि-करणे सकलपापराहित्यं सर्वात्मत्वं सर्वविभूतिमत्त्वं ज्ञापितान्तर्यामित्वञ्चेति लिङ्गचतुष्टयेनादित्याक्षिपुरुषयोरीश्वरत्वं निर्धारितम्। एवमधिकरणान्तरेषु द्वाभ्यां त्रिभिश्चतुर्भिः पञ्चभिर्वेश्वरत्वलिङ्गैस्तस्य तस्येश्वरत्वं निर्धारितम्। न [illegible] कस्मिन्नप्यधिकरणे दशेश्वरत्वलिङ्गानि प्रदर्शितानि। अत्र महोपनिष-दादौ दशभिर्विंशतिभिस्त्रिंशद्भिरधिकैश्चेश्वरलिङ्गैर्नारायणस्येश्वरत्वनिर्धारणाभावे तेष्वधिकरणेषु त्रिभिष्षड्भिर्वादित्यपुरुषादेस्तस्य तस्येश्वरत्वनिर्धारणाभाव कैमुतिकन्यायसिद्ध एवेति तेषामधिकरणानां सर्वेषां भङ्गापत्तिरनिवार्यैव।

न च नारायणस्यानीश्वरत्वगमकान्यपि श्रूयन्त इति वाच्यम्। आदित्यान्तर्गतहिरण्मयपुरुषादिष्वपि अनीश्वरत्वगमकानां श्रवणस्य समान-त्वात्। श्रुतिपुराणादिभ्यो यस्मिन्ननीश्वरत्वलेशोऽपि नावगम्यते तस्यैव सर्वेश्वरत्वं नेतरस्यातस्तुरीयपरमशिवस्यैव सर्वेश्वरत्वं न तु विष्णुरुद्रादीना-मितीदानीन्तनैः विष्णुनिन्दकैरसर्वज्ञमन्यैर्निर्लज्जैः कल्प्यमाननियमस्यैकस्मि-न्नधिकरणे वा तत्कोणे वाभावात्। तस्य तस्येश्वरत्वसमर्थनपरेषु सर्वे-ष्वधिकरणेषु जीवो वेश्वरो वेति संशयप्रदर्शनपूर्वकं जीव एवेति पूर्वपक्षं प्रापय्य तद्युक्तीनां दौर्बल्यं प्रदर्श्य प्रबलैरीश्वरत्वलिङ्गैस्तस्य तस्येश्वरत्व प्रतिष्ठाप्य तदनुसारेणैवानीश्वरत्वगमकानां नयनात्। नारायणस्य चानी-श्वरत्वप्रत्यायकश्रुत्यादिसन्दर्भाणामत्यन्तदौर्बल्यस्य सर्वेश्वरत्वबोधकश्रुत्यादि-सन्दर्भाणामत्यन्तप्राबल्यस्य च विस्फुटं दर्शितत्वात्।

किञ्चास्यामुपनिषदि पञ्चतन्मात्रपञ्चमहाभूतेन्द्रियान्तःकरणसृष्ट्यनन्तरं हि ललाटादित्यादिना मूर्तिरूपत्वं "यच्च किञ्चिज्जगत्यस्मि"न्नित्यादिना सर्वव्यापकविम्बचैतन्यरूपत्वं चेति रूपद्वयं नारायणस्य कण्ठरवेणोक्तमिति

सिद्धत्वेनाकाशाद्युपादानकारणत्वदशायां नारायणस्य बिम्बचैतन्यरूपत्वं कथ-ञ्चिदपि केनाप्यनिवार्यं सिद्ध्यति। अत्र "विश्वं नारायणं यस्मा"दिति, "विश्वं नारायणं हरि"मिति, "विश्वमेवेदं पुरुष" इति, विश्वात्मानमिति चाभ्यासेन नारायणस्य विश्वात्मत्वाभिधानेन, अभ्यासस्य तात्पर्यग्राहकताया "आनन्दमयोऽभ्यासा"दित्यादौ सुप्रसिद्धत्वेन च तस्य विश्वात्मतायाः श्रुति-तात्पर्यविषयत्वस्य सिद्धत्वेन विश्वोपादानस्यैव विश्वात्मकत्वं न त्वन्यस्येति सिद्धत्वेन च नारायणस्य विश्वोपादानकारणताया अनिच्छद्भिरप्यवश्यमङ्गी-कर्तव्यत्वात् बिम्बचैतन्यरूपस्यैव विश्वोपादानत्वमिति सिद्धत्वात्।

ननु नारायणशब्दस्य मूर्तिरूपनारायणे रूढत्वेन "एको ह वै नारायण आसी"दित्यत्रत्यनारायणशब्देन तस्य कथं बिम्बचैतन्यरूपत्वं सिद्ध्येत्। प्रथमश्रुतस्य तस्य चरमश्रुताकाशादिसृष्टिपरवाक्यशे-षानुसारेण रूढिपरित्यागे उपक्रमाधिकरणविरोधापत्तेरिति चेदुच्यते। "एको ह वै नारायण आसी"दिति; "अथ पुनरेव नारायणस्सोऽन्यं कामं मनसाध्यायत तस्य ध्यानान्तस्थस्य ललाटात्स्वेदोऽपतत्" इति च ब्रह्माण्डान्तर्गतप्राणिसृष्टिवचनान्तरं तदन्तर्वर्तिप्राणिनः प्रति कारणत्वं हि स्वरसतोऽवगम्यते। तथा चाकाशादीनां ब्रह्माण्डस्य तन्मध्यगतप्राणिनाञ्च सृष्टिवचनान्तरं प्राणिनः प्रति "एको ह वै नारायण आसी"दित्युक्तश्रुति-वचनगतनारायणशब्दस्य योगरूढत्वेन तेन शब्देन यौगिकया वृत्त्यावगत-बिम्बचैतन्यरूपनारायणः आकाशादिसृष्टेः प्रागासीत्तत एवाकाशादिक-मुत्पन्नमिति, तथा तेनैव नारायणशब्देन रूढ्यावगतो मूर्तिरूपस्स नारायणो-ऽन्यं कामं मनसाध्यायत तस्य ललाटात्स्वेद उदपतदिति चार्थस्तत्तन्दर्मस्य सम्भवत्येवेति "एको ह वै नारायण आसी"दित्यत्रत्यनारायणशब्देनावगत-रूढ्यर्थगन्धस्यापि परित्यागाभावेन नोपक्रमाधिकरणविरोधलेशोऽपि।

न च यत्र रूढ्यर्थयौगिकार्थयोरेकक्रियायामन्वय, तत्रैवार्थद्वयस्यापि ग्रहणं न्याय्यम्। अत्र तु नारायणशब्देनावगतस्य यौगिकार्थस्याकाशादि-जनकत्वं रूढ्यर्थस्येशानादिजनकत्वञ्चोच्यते। तच्चानुपपन्नम्; क्वाप्यदर्शना-दिति वाच्यम्। तथात्वे विकसितकमले पङ्कजत्वव्यवहारस्य निमज्जना-पत्तेः। तस्याविर्भूतकोरकदशायामेव पङ्कजनिकर्तृत्वं न तु विकसितपृथु-

कमलदशायामिति सिद्धत्वात्। नारायणस्य च बिम्बचैतन्यरूपसूक्ष्मत्वदशाया यौगिकार्थत्व श्रीमूर्तिरूपस्थूलत्वदशाया रूढ्यर्थत्वमिति समानत्वात्। नारायणशब्दस्य यौगिकया वृत्त्या बिम्बचैतन्यरूपनारायणपरत्व भगवत्पादैः सहस्रनामभाष्ये दर्शितम् "नर आत्मा ततो जातान्याकाशादीनि कार्याणि नाराणि तानि अयनं कारणात्मना व्याप्नोति, अतश्च तान्यस्यायनमिति नारायण.।

"यच्च किञ्चिज्जगत्यस्मिन्दृश्यते श्रूयतेऽपि वा।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायण स्थित" ॥ इति श्रुते ॥

"नराज्जातानि तत्त्वानि नाराणीति ततो विदु।
तान्येव चायनं तस्य तेन नारायण स्मृत" ॥
इति महाभारते।

अयनत्वान्नराणां प्रलय इति वा नारायण।
"यत्प्रयन्त्यभिसंविशन्ती"ति श्रुते।

"ब्रह्मादीन्यस्य भूतानि चराणि स्थावराणि च।
अयनानि पुरा विष्णोर्नारायण इति स्मृत" ॥ इति ॥

अत्र भगवत्पादैस्तैत्तिरीयनारायणानुवाकगतवाक्योदाहरणपूर्वक नारायणस्य बिम्बचैतन्यत्वरूपसर्वेश्वरत्वसमर्थनेन तैत्तिरीयनारायणानुवाक नारायणगतसर्वेश्वरत्वपर एवेति भगवत्पादानामाशयो विस्पष्ट। वार्तिककारपूज्यपादानाञ्च बृहदारण्यवार्तिके पञ्चमाध्यायेऽन्तर्यामिब्राह्मणव्याख्यानावसरे सोऽन्तर्यामी नारायण एवेति प्रतिष्ठापनप्रस्तावे—

चतुर्धा प्रविभज्यैनं सात्वता पर्युपासते।
तथा हैरण्यगर्भायास्तथा पाशुपतादय ॥

कृष्णद्वैपायनो व्यासो वेदात्मा ध्वान्तहानिकृत्।
प्राहैवमेव यद्रूपं भाविना हितकाम्यया ॥

नारायण परोऽव्यक्तादण्डमव्यक्तसम्भवम्।
अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी।

तस्मै नमोऽस्तु देवाय निर्गुणाय गुणात्मने ।
नारायणाय विश्वाय देवानां परमात्मने ॥

एतमेव समुद्दिश्य मन्त्रो नारायणस्तथा ।
वेदाविद्भिर्महाप्राज्ञैः पुरुषैर्विनियुज्यते ॥

इति तदानन्दगिरीये स्फुटतयैव दर्शितम् । उक्तेऽन्तर्यामिणि पाञ्चरात्राणां संमतिमाह—चतुर्धेति । वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धात्मनेति यावत् । उक्तं हि—

"परं ब्रह्म परं धाम चतुरात्मकमव्ययम् ।" इति,
"त्रीणर्थेद्वासुदेवश्च मूर्तित्रयसमन्वित" मिति च ॥

अन्योऽप्याह--

या वै सर्वेश्वरी शक्तिरीश्वराख्या नियामिका ।
ज्ञानानि भेदभिन्नेन ह्यायेन चतुरात्मना ॥ इति ॥

"अन्तर्यामि च सर्वेषां देवानां पुरुषोत्तमः" इति च ।

भागवतवत् योगशास्त्रविदोऽपि स्वशास्त्रक्रमेण कार्यकारणादिभावेन तं विभज्य ध्यायन्तीत्याह—तथेति । उक्तं हि "ईश्वरप्रणिधानाद्वा । क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः । तत्र निरतिशयं सर्वज्ञबीजम् । स पूर्वेषामपि गुरु" रित्यादि । तत्रैव माहेश्वरसम्मतिमाह—तथेति ।

यथोक्तम्—

निरञ्जने परे व्योम्नि नित्यस्सोऽकरणोऽव्ययः ।
साञ्जनं शक्तिकरणैराधितिष्ठति शङ्करः ॥

स्थितौ स कारकानेतान् समाक्रम्य स्वतेजसा ।
युनक्ति स्वार्थसिद्ध्यर्थं मूर्तैरनभिलक्षितैः ॥ इति ॥

आदिशब्देन सर्वेश्वरस्य ईश्वरवादिनो गृह्यन्ते । तत्रैव व्याससम्मतिमाह—कृष्णेति । कथमाहेति तदाह नारायण इति । कथं तर्हि तस्य कारणत्वम् ? अज्ञानद्वारेत्याह—अण्डमिति । भूरादिलोकाना हेत्वन्तरं

वारयति—अण्डस्येति। तानेव विशेषतो दर्शयति—सप्तेति। चशब्दोऽनुक्तसमुच्चयार्थः। किमित्यन्तर्यामी नारायणो निर्दिश्यते सर्वपुमर्थहेतुमद्धीभावविषयत्वेनेत्याह—तस्मादिति। न केवलम्पुराणागमाभ्यां सोऽधिगम्यते, किन्तु श्रुत्यक्षरैरपीत्याह—एतमेवेति।

"सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम्।
विश्वं नारायणं देवमक्षरं परमं प्रभुम्" ॥

इत्यादिमन्त्रो वेदार्थविद्भिरन्तर्यामिणमुद्दिश्य विनियुज्यत इति। अत्र वार्तिककारपूज्यपादैः 'वेदविद्भिर्महाप्राज्ञैः पुरुषैर्विनियुज्यत' इति वेदार्थविद्भिर्महाप्राज्ञैर्नारायणानुवाको नारायणस्य सर्वान्तर्यामित्वमुद्दिश्य विनियुज्यत इत्युक्त्या, वेदार्थ दीक्षितानां तात्पर्यमजानद्भिरिदानीन्तनैः पाषण्डोपहतचित्तैर्मूर्खैरिव सोऽनुवाकोऽन्यथा नीयत इत्यवगम्यते। एवं वैदिकमतप्रतिष्ठापनार्थमवतीर्णाभ्यां श्रीमद्भाष्यकारवार्तिककारपूज्यपादाभ्यां तैत्तिरीयनारायणानुवाको नारायणस्य सर्वेश्वरत्वाभिधानपर इत्यभिधानेन तदनुवाकस्य सर्वस्याप्यस्यामुपनिषदि आम्नानेन चैषमुपनिषत्सर्वापि नारायणस्य सर्वेश्वरत्वाभिधानपरैवेति सिद्धम्। एवञ्च "एको ह वै नारायण आसी"दित्यत्रत्यनारायणपदस्य न रूढिपरित्यागदोषः। अथ वा मूर्तिरूपस्याकाशादिसर्वकारणत्वासम्भवेनात्र नारायणपदस्य बिम्बचैतन्यरूपनारायणपरत्वमावश्यकमेव। "अग्निरमीतेऽनुवाक"मित्यादौ चरमश्रुतानुसारेण लक्षणाश्रयणस्य सुप्रसिद्धत्वात्। अन्यथा तादृशस्थलेषु लक्षणोच्छेदापत्तेः।

किञ्चास्यामुपनिषदि नारायणस्य जगत्प्रति स्थितिलयौ प्रति च कर्तृत्वं तात्पर्येणैवोक्तमिति सिद्धतया एकेन नारायणेनैव जगतः उदयस्थितिलयरूपसकलप्रयोजनेषु उपपन्नेषु तस्य जनकत्वेनान्यस्येश्वरस्य कल्पने मानाभावः। प्रयोजनाभावश्च। न चाथर्वशिखायां शिवस्य सर्वेश्वरता तस्माद्विष्णोरुत्पत्तिश्चोक्तैवेति कथं मानाभाव इति वाच्यम्। तथात्वेऽपि प्रयोजनाभावदोषस्यानिवृत्तत्वेन प्रयोजनरहितार्थाभिधाने श्रुतेस्तात्पर्याभावस्य सिद्धत्वेन चैतन्यरूपस्य कस्यापि कस्माचिदपि उत्पत्त्यसम्भवेन चाथर्वशिखायाश्शिवस्येश्वरताभिधानपरत्वे वा विष्णोरुत्पत्त्यभिधानपरत्वं वा न

सम्भवत्येवेत्यस्या अन्यथा नयनापत्तेः । तत्र मूर्तिरूपविष्णोरेव शिवादुत्पत्ति-रुक्ता ब्रह्मरुद्रेन्द्रप्रमभिव्याहारेण तदवगमादित्यङ्गीकारे आकाशादिकारणत्वेनैतदुपनिषत्सिद्धाविम्नचैतन्यरूपनारायणस्योत्पत्तिकल्पने मानाभावसिद्ध एवेति मानाभावः प्रयोजनाभावश्चेत्युक्तदोषद्वयं तदवस्थमेव । विष्णुशिवयोर्भेद एवेति पाषण्डमार्गं विहाय तयोर्बिम्बचैतन्यरूपेणाभेद एवेति भगवत्पादैः प्रदर्शितवैदिकमार्गमनुसरता न कोऽपि दोषगन्धः । उदाहृतपराशरोपपुराणादिवचनानामन्येषाञ्च शिवस्येश्वरत्व एव तात्पर्यम्, न तु विष्णोरनीश्वरत्वे च । उभयत्र तात्पर्ये वाक्यभेदापत्तेरिति तानि वचनानि शिवस्येश्वरत्वपराण्येवेति वक्तव्यम् । अन्यथा तात्पर्येणैव नारायणस्येश्वरत्वाभिधायकैरन्महोपनिषदादिविरोधे पुराणादिवचनानामयुतानां लक्षसङ्ख्याकानामपि विरोधाधिकरणन्यायेनाप्रामाण्यापत्तेरनिवार्यत्वात् । एतादृशैः पुराणवचनैरेव श्रुतितात्पर्यनिर्णये उपक्रमोपसंहारादीनि श्रुतिलिङ्गादीनि च निर्णायकत्वेनादाय प्रवृत्तमीमांसाया अनारम्भप्रसङ्गात् । पुराणादिवचनानां श्रुत्युपबृंहकत्वञ्च यत्र श्रुतिवचनानि सन्दिग्धार्थकानि, यत्र च पुराणादिवचनानि तदविरुद्धार्थकानि तत्रैव न्याय्यम् । अतस्तानि वचनानि शिवस्येश्वरत्वं द्रढीकुर्वन्ति सन्ति न हि निन्दान्यायेन तदुपासने फलच्युत्पादनार्थानीति सिद्धम् ।

किञ्चात्र "एको ह वै नारायण आसी"दित्यस्य दीक्षितैः कल्पितोत्पत्त्यर्थकत्वेऽङ्गीकृते महोपनिषदा नारायणेऽभिहितं जगत्कारणत्वादिकं शिव एव पर्यवस्यति न नारायण इति तत्कल्पनाङ्गीकारपक्षे अथर्वशिरसि "अहमेकः प्रथममासं वर्तामि भविष्यामि च नान्यः कश्चन मत्तो व्यतिरिक्त" इति वाक्यस्याहमेक एव नारायणात्प्रथममुत्पन्नोऽस्मि, अहमेक एव वर्ते सर्वलयानन्तरमहमेक एव भविष्यामि नान्यः कश्चन मत्तो व्यतिरिक्त इत्यर्थकत्वं भवद्रीत्या सम्भवत्येवेति तत्र प्रतिपाद्यरुद्रस्य न यणादुत्पत्तिसम्भवेन तस्मिञ्शिवे तथाथर्वशिरउपनिषदावगतजगत्कारणत्वादिकं नारायण एव पर्यवस्यति । तेन च श्रुत्यन्तरैः पुराणादिभिश्च शिवेऽभिहितजगत्कारणत्वादिकं नारायण एव पर्यवसन्नमिति सिद्ध्यति ।

न च शिवनारायणयोरुभयोरपि जन्यजनकभावः शिवे विष्णौ वा जगत्कारणत्वादिपर्यवसानञ्च समानतयैवावगम्यत इति कथं विनिगमकं विनैव शिवेऽभिहितजगत्कारणत्वादेर्नारायणे पर्यवसानाभिधानमिति वाच्यम्। अस्य दोषस्य नारायणेऽभिहितं शिव एव पर्यवसन्नमिति वक्तुरपि समानत्वात्।

न च नारायणस्य शिवादुत्पत्त्यभिधानपराया ब्रह्मविष्णुरुद्रेत्यादिश्रुतेरनुगुणं तदुचितमिति वाच्यम्। "नारायणाद्रुद्रो जायत" इत्यादिश्रुत्यनुगुणमेतदप्युचितमेवेति समानत्वात्। न च तुरीयत्वमस्तीति वाच्यम्। नारायणस्यापि तुरीयताया दर्शितत्वात्।

न चास्मिन्पक्षे सर्वा अपि श्रुतयश्शिवपरा एवेत्याद्यभिधायकपुराणवचनजातमेव विनिगमकमिति वाच्यम्। अस्मिन्पक्षेऽपि तथाभिधायकवचनानां समानत्वात्।

ब्रह्माण्डे—

"रुजं द्रावयते यस्मात्तस्माद्रुद्रो जनार्दनः।
ईशनादेव चेशानो महादेवो महत्त्वतः॥

बृहत्त्वाद्ब्रह्मनामासौ ऐश्वर्यादिन्द्र उच्यते।
एवं नानाविधैश्शब्दैरेक एव त्रिविक्रमः॥

वेदेषु सपुराणेषु गीयते पुरुषोत्तम।
येऽन्यं देवं परत्वेन वदन्त्यज्ञानमोहिताः॥

नारायणाज्जगन्नाथात्ते वै पाषण्डिनः स्मृता"।

इति सकलवेदेषु पुराणेषु च नारायण एव नानाविधैश्शब्दैस्सर्वोत्कृष्टत्वेन प्रतिपाद्य इत्युक्त्वा नारायणादन्यदेवस्य परमत्वनिषेधेन, तथा कौर्मे—

"वेदवेद्यो हि भगवान्वासुदेवस्सनातनः।
गीयते च परो वेदैर्यो वेद (!) न स वेदवित्॥

येऽन्यं देवं परत्वेन वदन्त्यज्ञानमोहिताः ।
नारायणाज्जगन्नाथात्ते वै पाषण्डिनः स्मृताः" ॥

इत्यत्र सकलवेदपुराणेषु च नारायण एव नानाविधैश्शब्दैस्सर्वोत्कृष्टत्वेन प्रतिपाद्य इत्युक्त्वा वेद्यत्वेन परत्वेन नारायणमभिधाय तदन्यस्य परभावप्रतिषेधेन—

वराहपुराणे—

"नारायणात्परो देवो न भूतो न भविष्यति ।
एतद्रहस्यं वेदानां पुराणानाञ्च सत्तम ॥" इति,

तथा आदित्यपुराणे—

"अहं विष्णोस्तु सम्भूतस्स च सर्वमयो हरिः ।
न तस्य परतो भूतं विद्यते यत्तदुत्तमम् ॥

पुराणेषु द्विजश्रेष्ठ दक्षस्तद्धासु नान्यथा ।
अन्यथा ये मपद्यन्ते नारकास्ते न संशयः," ॥ इति ॥

तथा हरिवंशे कैलासयात्रायां महेश्वरवचनम्—

"त्रिरिसेव त्रयो वेदा कीर्तिता मुनिसत्तमैः ।
क्रमते तान् यथा सर्वान् त्रिविक्रम इति स्मृतः"
॥ इति ॥

तथा तत्रैव—

"इत्युक्त्वा देवदेवेशं मुनीनाम * * * * नशिशवः ।
एतदेव परं वस्तु मुने तस्मात्परं न हि ॥

ए तदेव विजानीध्वमेतद्वः परमं तपः ।
एतदेव सदा विप्रा ध्येयं प्रयतमानसैः ॥

एतद्वः परमं श्रेयो ह्येतद्वः परमं धनम् ।
एतद्वो जन्मनः कृत्यमेतद्वस्तपसः फलम् ॥

एष वः पुण्यनिलय एष धर्मस्सनातनः ।
एष वो मोक्षदाता च एष मार्ग उदाहृतः ॥

एतदेव प्रशंसन्ति विद्वांसो ब्रह्मवादिनः ।
एषोऽत्राधिगतो विप्राः प्राप्यों ब्रह्मविदां सदा ॥

एतदेव प्रशंसन्ति साङ्ख्ययोगसमाश्रिताः ।
एष ब्रह्मविदां मार्गः कथितो वेदवादिभिः ॥

हरिरेकस्सदा ध्येयो भवद्भिस्सत्त्वसंस्थितैः ।
नान्यो जगति देवोऽस्ति विष्णोर्नारायणः परः ॥

ओमित्येवं सदा विप्राः पठध्वं ध्यात केशवम्" ।

इति । तत्रैव हरिवंशे नारदमहामुनिं कूर्मगङ्गासमुद्रपृथ्वीगिरिशिवब्रह्मवेदयज्ञेषु धन्यत्वाश्चर्यत्वयोरसम्भवं श्रीकृष्णरूपनारायणे पर्यवसानञ्च राज्ञः प्रत्युक्तवानित्युक्तञ्चोक्तम्—

"नारायणपरा वेदा नारायणपरा मखाः ।
नारायणपरं ज्ञानं नारायणपरं तपः ॥

न च नारायणादन्यस्त्रिषु लोकेषु विद्यते ।
नारायणात्मकमिदं जगत्स्थावरजङ्गमम् ॥

इयं हि वेदार्थगतिस्सनातनी नृपा यदि श्रोष्यथ मद्वचः परम् ।
इदन्तु सत्य सकलं नृपोत्तमा इत्येवमुक्त्वा स दिवं जगाम ह"
॥ इति ॥

महाभारते शान्तिपर्वणि—

"ब्रह्माणं शितिकण्ठञ्च याश्चान्या देवताः स्मृताः ।
प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम्" ॥ इति ॥

तत्रैव भारते—

"आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा ॥
एतन्नारायणध्यानं सर्वशास्त्रप्रयोजन"मिति ।

तथा तत्रैव भगवद्गीतायाम्—

"यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" ॥ इति ॥

तत्रैव "वेदैश्च सर्वैरहमेव वेद्य" इति च । अत्राहमेव नारायण एवेत्येवकारेणान्यस्य वेदवेद्यत्वनिराकरणेन च सर्वा अपि श्रुतयो नारायणपरा एवेत्यभिधायकवचनजातस्यात्रापि विनिगमकत्वं समानमिति सिद्धमेव ।

न च तर्हि शिवे निरुपपदेश्वरेशानेशमहेश्वरादिशब्दानां प्रयोग एवोक्तार्थसिद्धौ विनिगमक इति वाच्यम् । नारायणे निरुपपदविष्ण्वनन्ताजितविश्वरूपविश्वम्भरादिशब्दानां प्रयोग एवात्रापि विनिगमक इत्यस्य समानत्वात् ।

ननु विष्णुत्वानन्तत्वादिकमीश्वरत्वधर्मिण एव सम्भवति, न त्वन्यस्य, परिच्छिन्नस्यान्तवतो वेश्वरत्वासम्भवादितीश्वरादिशब्दा अपि मण्टपाश्वकर्णादिशब्दा इव केवलरूढा भवेयुरिति समानमेव । शिवस्यैश्वरत्वेऽभिहिते विष्णुत्वानन्तत्वादिकमर्थात्सिद्ध्यतीति चेत्, नारायणस्य विष्णुत्वेऽनन्तत्वे वाभिहिते ईश्वरत्वमर्थात्सिद्ध्यतीत्येतच्च समानमेव ।

न च शिवस्य महेश्वरमहादेवशब्दाभ्यां महत्त्वं सिद्ध्यतीति वाच्यम् । महतो विष्णुत्वानन्तत्वयोरभावे महत्तत्त्वादेरिव परिच्छिन्नत्वान्तवत्त्वयोरनिवार्यत्वात् । न च तर्हि नारायणस्य महत्त्वं विना कथं विष्णुत्वमनन्तत्वञ्च सिद्ध्येदिति वाच्यम् । महापुरुषशब्देन तस्य सिद्धत्वात् । तथा शङ्करादिशब्दैर्विश्वम्भरादिशब्दैश्चोभयोरसकलपुरुषकर्तृत्वं समानमेव सिद्ध्यति । "विश्वाधिको रुद्र" इत्यादिश्रुत्युक्तं सर्वोत्कृष्टत्वं तत्र विनिगमकमिति चेत्; "विश्वतः परमं नित्य"मित्यादिश्रुत्युक्तं

सर्वोत्कृष्टत्वमत्र विनिगमकमिति समानमेव। एवमुक्तस्य सर्वस्य समानत्वेऽप्यस्त्येवात्र विनिगमकम्। "नारायणाद्रुद्रो जायत" इति येन रुद्रशब्देन तमनूद्य तस्य नारायणादुत्पत्तिरुक्ता, तेनैव रुद्रशब्देन तमनूद्य तस्याथर्वशिरसि जगत्कारणत्वादिप्रतिपादनेन नारायणादुत्पन्नरुद्रस्यैवाथर्वशिरसि जगत्कारणत्वादिकमुक्तमिति झटित्यवगतेरेवात्र विनिगमकत्वसम्भवात्। येन विष्णुशब्देन विष्णुमनूद्य तस्य ब्रह्मविष्णुरुद्रेत्यादिना शिवादुत्पत्तिरुक्ताथर्वशिरसाया, महोपनिषदि तं विष्णुशब्दं विनैव नारायणशब्देन नारायणमनूद्य तस्य जगत्कारणत्वाभिधानेन शिवाज्जातस्यैव कारणत्वादिकमुक्तमिति झटित्यवगतेरसम्भवात्। श्रुतिषु नारायणशब्देन नारायणमनूद्य तस्य तस्मादुत्पत्त्यभिधानाभावात्।

किञ्च सुबालोपनिषदि "वेदशास्त्रैरुपास्यमानो न च वेदशास्त्राण्युपास्यती"ति नारायणस्य वेदशास्त्रैरुपास्यत्वोक्त्या वेदशास्त्राणां नारायणोपासकत्वस्य सिद्धत्वेन उपासकानामुपास्यपरत्वस्य सिद्धत्वेन च नारायणोपासकानां सकलवेदशास्त्राणां नारायणपरत्वप्रतिपादकैतदुपनिषद्वचनस्यात्र विनिगमकत्वं सिद्धमेव। श्रुतिवचनानुसारेण श्रुतेस्तात्पर्याभिधाने सम्भवति तदपहाय पुराणवचनानुसारेण श्रुतेस्तात्पर्याभिधानस्यान्याय्यत्वात्। एवं वेदशास्त्राणां शिवपरत्वाभिधायकश्रुतिवचनस्यादर्शनात्।

किञ्च तस्यामेव सुबालोपनिषदि नारायणस्य सर्वान्तर्यामित्वप्रतिपादकसन्दर्भे "यो रुद्रो यो नाड्या"मित्यादिना रुद्रे नारायणनियम्यत्वप्रतिपादनेन तस्मिन्रुद्रे नारायणाद्दौर्बल्यावगमकैतच्छ्रुतिवाक्यस्यात्र विनिगमकत्वमेव नियामकरूपप्रबलस्यैव सर्वकारणत्वादिकं न तु नियाम्यरूपदुर्बलस्येत्यस्य सर्वसम्मतत्वात्। प्रसिद्धश्रुतिषु क्वापि नारायणे शिवाद्दौर्बल्यसूचकशिवनियम्यत्वादेरभिधानाभावात्।

ननु प्रसिद्धश्रुतिषु नारायणशब्देन नारायणमनूद्य तस्मिन् दौर्बल्यसूचकानियम्यत्वाद्यभिधानाभावेऽपि "यो वै रुद्रस्स भगवान् यतश्च विष्णु"रित्यथर्वशिरोवाक्ये विष्णुशब्देन विष्णुमनूद्य तस्य विभूतित्वाभिधानेन तयाथर्वशिरसाया ब्रह्मविष्ण्वित्यादिना तस्य शिवादुत्पत्त्यभिधानेन च

सूचितमेव तस्मिन्विष्णौ शिवापेक्षया दौर्बल्यमिति चेन्न । अथर्वशिरोवाक्येन विष्णुशिवयोर्गौणस्य वा मुख्यस्य वाभेदस्यैवाभिधानेन अभेदस्य स्वाश्रये दौर्बल्यमूलकत्वाभावात् । "रुद्रस्स भगवानेव । यः प्रसिद्धो विष्णुस्स च" इत्युक्त्या तयोरभेदस्य विस्पष्टत्वात् । जन्यस्य जनकापेक्षया क्वचित् प्रबलतायाः कचिद्दुर्बलताया दर्शनेन श्रुतिपुराणादिभ्यः श्रवणेन च जन्यत्वस्य दौर्बल्यव्याप्यत्वाभावेन विष्णुनिष्ठशिवजन्यत्वस्य विष्णौ शिवापेक्षया दौर्बल्यगमकत्वासम्भवात् ।

किञ्च विष्णोः श्रीकृष्णरामवामननृसिंहादिरूपेण वसुदेवदशरथादिभ्यो जातस्य तेभ्यः प्रबलताया एव श्रवणेन विष्णुजनकस्य कस्यापि तत्तत्पुत्ररूपविष्ण्वपेक्षया प्राबल्यश्रवणाभावेन च शिवभिन्नविष्णुजनकेषु सर्वेषु विष्णुजनकत्वस्य दौर्बल्यजनकत्वावगमेन विष्णुजनकशिवे च दौर्बल्यकल्पनसम्भवेन विष्णौ जन्यत्वाम्नानमात्रेण शिवापेक्षया तस्मिन् दौर्बल्यकल्पनप्रसक्त्यभावस्य कैमुतिकन्यायसिद्धत्वात् । अपि चास्यामुपनिषदि "ललाटात् त्र्यक्षश्शूलपाणिः पुरुषो जायते" इत्यादिना विष्णुशब्दमुख्यार्थभूतश्रीमन्नारायणललाटात्परमशिवस्योत्पत्त्यभिधानमपि विनिगमकाभावं भजति । शिवादिशब्दमुख्यार्थभूतश्रीमूर्तिरूपशिवाद्विष्णोरुत्पत्त्यभिधायकश्रुतेरभावात् । अथर्वशिरसो विष्णुपरत्वादेव विष्णोरुत्पत्तिरुक्तेति दर्शितत्वात् । विष्णूत्पत्तिपरपुराणानुसरणापेक्षया शिवोत्पत्तिपरश्रुत्यनुसारेण अथर्वशिरस्युत्पत्तिकल्पनस्यैव न्याय्यत्वात् ।

मूर्तित्रयान्तर्गतरुद्रस्यैव । तदुभयापेक्षयोत्कर्षस्सर्वोऽपि तुरीयशिवस्यैव । विष्णोरेवं वक्तुमवकाशो नास्त्येवेति केषाञ्चिद्विष्णुनिन्दकानां मनोरथतरुरशनिनेव समूलं भग्नः ।

नन्वथर्वशिरःप्रभृतिषु शिवस्य सर्वान्तर्यामित्वसर्वात्मत्वसर्वकारणत्वसर्वव्यापकत्वसर्वोत्कृष्टत्वाजत्वनित्यत्वाद्यभिधानेन तस्य बिम्बचैतन्यरूपत्वसिद्ध्या अथर्वशिरःप्रभृतिषु षड्विधलिङ्गैस्तस्य सर्वेश्वरत्वदृढीकरणेन तस्योत्पत्त्यादिनिकर्षप्रत्यायकवचनेषु स्वार्थतात्पर्यग्राहकलिङ्गानामभावेन तदुक्तोत्पत्त्यादिनिकर्षस्याभिनयरूपत्वसम्भवेन तस्योत्पत्त्याद्यसम्भवेन च तस्मिन् सर्वेश्वरे शिवेऽभिहितं तत्तु नारायण एव पर्यवस्यतीत्यभिधानमतीवापहास्यपदमिति चेन् । सत्यम् । इदमभिधानमपहास्यपदमिति वक्तुस्तव बुद्धिर्नारायणेऽभिहितं तत्तु शिव एव पर्यवस्यतीति दीक्षितैरुक्तमित्यङ्गीकारसमये क गत्वा स्थितवती ? नारायणस्यैतन्महोपनिषदादौ कण्ठरवेणैवाकाशादिसकलजगदुदयस्थितिलयहेतुत्वसर्वात्मत्वसर्वव्यापकत्वसर्वान्तर्यामित्वसर्वोत्कृष्टत्वाजत्वनित्यत्वाद्यभिधानेनाष्टाविंशतिसौबालवाक्यैस्तस्याजरत्वामृतत्वाभयत्वाद्यौपनिषत्त्वानन्तत्वाद्यभिधानेन च तस्य बिम्बचैतन्यरूपत्वसिद्ध्या महोपनिषन्नारायणोपनिषत्सुबालोपनिषत्तैत्तिरीयनारायणानुवाकादिषु षड्विधतात्पर्यग्राहकलिङ्गैस्तस्य सर्वेश्वरत्वदृढीकरणेन तस्योत्पत्त्यादिनिकर्षप्रत्यायकवचनेषु षड्विधलिङ्गानामभावेन तदुक्तनिकर्षस्याभिनयरूपत्वसम्भवेन तस्य शिवादुत्पत्त्याद्यसम्भवेन च सर्वेश्वरे तस्मिन्नारायणेऽभिहितं तत्तु शिव एव पर्यवस्यतीत्युक्तेरप्यपहास्यहेतायास्समानत्वात् । अत एतन्महोपनिषदि नारायणस्य मुख्यया वृत्त्या सर्वेश्वरत्वं तात्पर्येणैवोक्तमिति सिद्धम् ।

महोपनिषदो व्याख्या श्रीरामस्य कृपापरा ।
कृतास्य प्रीतये भूयात् श्रीरामस्य जगत्पतेः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वाधिकसरस्वतीचरणशिष्यश्रीबोधेन्द्रसरस्वतीकृतिषु हरिहराद्वैतभूषणे
• हरिपारम्यनिरूपणं नाम प्रथमो
भागस्समाप्तः ॥

## अथ द्वितीयो भागः

अथर्वशिरसा वेद्यसाम्बसर्वेश्वरशिशवः ।
श्रीरामरूपः स्फुरतु कृपया मे हृदम्बुजे ॥

अथर्वशिरसि शिवस्य सर्वकारणत्वसर्वान्तर्यामित्वादिकं स्फुटमुक्तम् । तत्रादौ "देवा ह वै स्वर्गं लोकमगमन् । ते देवा रुद्रमपृच्छन् । को भवानिती" ति सन्दर्भो रुद्रं प्रति देवकर्तृकप्रश्नाभिधायकः । "सोऽब्रवीदहमेकः प्रथममासं, वर्तामि च, भविष्यामि च । नान्यः कश्चन मत्तो व्यतिरिक्त इति सोऽन्तरादन्तरं प्राविशद्दिशश्चान्तरं तं प्राविशत्सोऽहं नित्यानित्यो ब्रह्म । ब्रह्माहं प्राञ्चः प्रत्यञ्चोऽहं दक्षिणाञ्चोदञ्चोऽहं, अधश्चोर्ध्वञ्च दिशश्च विदिशश्चाह" मित्यादिः, "अहमेकस्सर्वे च मामेव च मां यो वेद स सर्वान् देवान् वेद गां गोभिः ब्राह्मणान् ब्राह्मण्येन हवींषि हविषायुरायुषा सत्यं सत्येन धर्मं धर्मेण तर्पयामि स्वेन तेजसे" त्यन्तसन्दर्भः भगवच्छिवस्य परमात्मत्वं बोधयन्नुक्तप्रश्ने उत्तरत्वेन प्रवृत्तः । तदनन्तरं "ततो देवा रुद्रं नापश्यंस्ते देवा ऊर्ध्वबाहवः स्तुन्वन्ती" त्यनेन तस्य सर्वैर्देवैरुपास्यमानत्वं स्तूयमानत्वञ्च दर्शितम् । ततश्च द्वितीयतृतीयखण्डयोः "यो वै रुद्रस्स भगवान् यश्च ब्रह्मा तस्मै वै नमो नमः" इत्यादिना ब्रह्मादीनां तद्विभूतित्वं प्रथमखण्डोक्तसर्वात्मत्ववचनेन सिद्धं विशिष्य निरूपितम् । चतुर्थपञ्चमखण्डयोस्तदीयनामकृन्दनिर्वचनकत्वेन तस्य परभावः स्फुटीकृतः । तत्रैव पञ्चमखण्डे उपरिष्टात्तस्योपासनादेव मोक्ष इत्युक्त्वा पाशुपतयोगात्मक तदुपास्तिप्रकारो दर्शितः । तदेवमादित आरभ्यान्तं विमृश्यमानमथर्वशिरोवचनजातं शिवस्य परमात्मभावमेव दृढीकारतात्पर्येणाविष्करोति ।

अत्र केचित् , अथर्वशिरउपनिषदस्तत्सन्दर्भे आदित आरभ्य आन्तं विमृश्यमाने स्वरसतश्शिवान्तर्यामिनारायणपरत्वमेवावगम्यते । तथा हि अस्या उपनिषद उपक्रमे तावत् "देवा ह वै स्वर्गं लोकमगमन् ।

ते देवा रुद्रमपृच्छन् को भवानिति" देशविशेषं गता देवाः स्वगमनात्प्रागेव तत्रावस्थितरुद्रे प्रभावातिशयदर्शनेन सन्दिहाना को भवान् किमस्मदादिवत् देवतामात्रभुत परमकारणभूत इति अपृच्छन् । परम एव पृष्टो रुद्रस्तान् प्रत्युक्तवान्, "अहमेकः प्रथममास, वर्तामि च, भविष्यामि च । नान्यः कश्चन मत्तो व्यतिरिक्तः" इत्यादिना "धर्मं धर्मेण तर्पयामि स्वेन तेजसे' इत्यन्तेन सन्दर्भेण । तत्राहमेकः प्रथममासमित्यादिना कारणत्व तदुपपादकं सर्वात्मभावान्वयमुखेन, "नान्यः कश्चन मत्तो व्यतिरिक्तः" इत्यादिना व्यतिरेकमुखेन च प्रतिपाद्य भगवदुक्तसार्वात्म्यं किं भवद्रूपत्वाभिप्रायेणोक्तमुत भवदन्तर्यामिगतत्वाभिप्रायेणेत्याशङ्का "सोऽन्तरादन्तर" मित्यादिना स्वस्मिन् सकलचेतनाचेतनान्तर्यामिणोऽनुप्रवेशकथनेन निरस्य, सोऽहमित्यादिस्वान्तर्यामिणं एव सार्वात्म्यं रुद्रेण प्रपञ्चितमिति तन्नियत जगत्कारणत्वमपि रुद्रान्तर्यामिणीति हि विस्पष्टं प्रतीयत इत्याविकमाहुः ।

तदसत् । अथर्वशिरसस्सर्वस्यापि शिवे सर्वेश्वरत्वाभिधानपरताया एव स्वरसतोऽवगमात् । तथा हि—अथर्वशिरस उपक्रमे "देवा ह वै स्वर्गं लोकमगमन्" इत्यत्र देवा इत्यनेन हीन्द्रपुरोगमा देवत्वावच्छिन्नास्सर्वे देवा गृह्यन्ते । देवा इति सामान्यश्रुतस्य विशेषपरत्वे विनिगमनाविरहात् । "स्वर्गं लोकमगमन् । ते देवा रुद्रमपृच्छ" न्नित्येतत्सुखाविर्भावलोकत्वेन शिवलोकपरम् । रुद्रमपृच्छन्निति प्रश्नस्य तद्दर्शनपूर्वकत्वावश्यम्भावेन तेषां झटिति तद्दर्शनस्य तल्लोकगमनं विनानुपपन्नत्वात् । अस्य लोकान्तरपरत्वे तु तत्र गतानां झटिति तद्दर्शनसिद्ध्ये शिवस्य तत्रावस्थानं, स्वलोकात्तत्र गमनं, गमनस्योद्देश्यं, स्वनिवासभूतलोकत्यागश्चेत्येतानि कल्पनीयानि । न हि तत्कल्पने मानमस्ति । किञ्च स्वर्गलोकमित्यस्य शिवलोकपरत्वे निर्धारितार्थकत्वं लभ्यते । अन्यथा स्वर्गं लोकमित्यस्यार्थे इन्द्रलोक इति वा चन्द्रलोक इति वा नक्षत्रलोक इति वान्य इति वा निर्धारयितुं न शक्यं एव । विनिगमकाभावात् । निर्धारितार्थकत्वे सम्भवत्यनिर्धारितार्थकत्वस्यान्याय्यत्वात् । तत्सिद्धमेव स्वर्गं लोकमित्यस्य सुखाविर्भावलोकत्वेन शिवलोकपरत्वम् । देवा किमुद्दिश्य शिवलोकमगमन्निति तेषां गमनोद्देश्याकाङ्क्षायां शिवदर्शनमेव मुख्यमुद्देश्यमित्यवसीयते । त्रिषु कालेषु विद्यमानः परमात्मा शिवो दिव्यमङ्गलविग्रहस्सन् शिवलोके

नित्यं सन्निहितास्तिष्ठतीति निश्चयवतां तेषां शिवदिदृक्षाया अवश्यम्भावित्वात् । तेषां तन्निश्चयवत्त्वञ्च "ते देवा रुद्रमपृच्छ"न्नित्यत्रार्थावगतरुद्रदर्शनस्य देवकर्तृकशिवलोकगमनोद्देश्यत्वसिद्धये तद्गमनोद्योगात्प्राक् तेषामुक्तशिवज्ञानस्य कल्पनीयत्वेन, अन्यथा तेषां तद्गमनोद्देश्याभावेन तद्गमनासिद्ध्या तद्गमनाभिधायकश्रुतेरानर्थक्यापत्त्या सिद्धमेव ।

न च शिवलोके सुन्दरतरप्रदेशविशेषरूपस्य स्रक्चन्दनवनितादिरूपस्य वा कस्यचित् दिदृक्षया गमनमिति वाच्यम् । तत्रत्यानां भोग्यवस्तुषु रागाभावेन भोग्यवस्तुदिदृक्षाया असम्भवात् ।

न च ब्रह्मनिष्ठेषु सिद्धानां व्यासपराशरादीनामपि कादाचित्करागलेशश्रवणेन साधकानामत्यन्तविरक्तानां तेषां कादाचित्करागलेशकल्पनसम्भवेनोक्तभोग्यवस्तुदर्शनमुद्दिश्य तद्गमनं सम्भवत्येव ; तेषां दृढतररागाभावेन प्रयासलभ्यभोग्यवस्तुषु प्रवृत्त्यसम्भवेऽपि अनायासलभ्यभोग्यवस्तुदर्शनमुद्दिश्य सुकरशिवलोकगमने प्रवृत्तिसम्भवादिति वाच्यम् । रुद्रदर्शनस्य तद्गमनोद्देश्यत्वकल्पनं तत्सिद्धये तद्गमनोद्योगात् प्राक् तेषामुक्तशिवज्ञानकल्पनञ्चेति कल्पनाद्वयमपहाय तद्भोग्यवस्तुदर्शनस्य गमनोद्देश्यत्वकल्पनं तत्सिद्धये तेषां शिवलोकगतातिसुन्दरविविधानेकभोग्यवस्तुविषयकज्ञानकल्पनं तद्विषयकरागकल्पनं तद्भोग्यवस्तुषु लौलस्यकल्पनं नारायणस्यैतदुपनिषत्प्रतिपाद्यत्वकल्पनञ्चेति बहुकल्पनाश्रयणस्यात्यन्तान्याय्यत्वात् ।

किञ्चात्र कथञ्चिदप्यनुपस्थितस्य भोग्यवस्तुदर्शनस्य गमनोद्देश्यत्वकल्पने तद्दर्शनरूपधर्मिकल्पनं तदुद्देश्यत्वरूपधर्मकल्पनञ्चेति पर्यवसानेन तदुभयकल्पनापेक्षया "रुद्रमपृच्छ"न्निति प्रश्नस्य रुद्रदर्शनं विनानुपपन्नत्वेनार्थात्सिद्धरुद्रदर्शनस्य गमनोद्देश्यत्वकल्पने तदुद्देश्यत्वरूपधर्मकल्पनमात्रपर्यवसानेनैनकल्पनस्यैव युक्तत्वात् । तद्गमनोद्योगात्प्राक् तेषां तद्भोग्यवस्तुरुद्रान्यतरविषयकज्ञानकल्पनस्य समानत्वात् । अपि च

एतदुपनिषत्प्रतिपाद्यत्वं नारायणस्य, तद्गमनोद्देश्यदर्शनविषयत्वं तद्भोग्यवस्तुजातस्य, अत्र "अहमेकः प्रथममास"मित्याद्युपदेष्टृत्वं रुद्रस्येत्यत्र प्रतिपाद्यत्वादेर्नारायणादित्रयाणामङ्गीकारापेक्षया एतत्प्रतिपाद्यत्वादिधर्मत्रयविशिष्टैकरुद्राङ्गीकारस्यैव लाघवानुगृहीतत्वात् ।

किञ्च रुद्रावासस्थानस्य विष्णुपुराणादौ सत्यलोकप्रदेशविशेषत्वाम्नानेनेन्द्रादीनां सत्यलोकप्रदेशविशेषगमनस्य च प्रयाससाध्यतापरिसिद्धत्वेन तद्गमने तद्भोग्यवस्तुदर्शनकल्पनस्योभयोर्पासिद्धेः । सर्वेश्वररूपशिवदर्शनस्यात्र गमनोद्देश्यत्वकल्पने तु शिवदर्शनविषयकदृढतरेच्छाया वैराग्यविरोधित्वाभावेन दोषस्य कस्याप्यत्रकाशाभावात् ।

न च सामान्यतः परमात्मत्वेन नारायणं जानन्तो विशेषतो जिज्ञासवस्ते देवा रुद्रलोके ब्रह्मनिष्ठो रुद्रस्तिष्ठतीति विज्ञाय तस्माद्ब्रह्मजिज्ञासयागमन्निति कल्पयितुं शक्यमिति वाच्यम् । तेषां रुद्रनारायणोभयविषयकज्ञानकल्पनापेक्षया लाघवेनापातत परमात्मत्वेन रुद्रं विज्ञाय तमेव विशेषतो ज्ञातुं द्रष्टुमागमन्निति कल्पनस्यैव युक्तत्वात् ।

किञ्चैते इन्द्रादयो देवा ब्रह्मजिज्ञासव एव न रुद्रदिदृक्षवो यदि तर्हि सत्यलोकप्रदेशविशेषरूपशिवलोकापेक्षया निकट एव ब्रह्मविद्वरिष्ठेषु सनत्सनकादिषु सत्सु तान्विहाय तावद्दूरगमनासम्भवेन तद्गमनप्रतिपादकश्रुतेरुपरोधापत्तिः । अपि च त्वन्मते रुद्रस्य तामसत्वेन—

"अधर्मं धर्ममिति या मन्यते तमसावृता ।
सर्वार्थान्विपरीतांश्च बुद्धिस्सा पार्थ तामसी ॥"

इति वचनानुसारेण तस्य विपरीतज्ञानवत्त्वाङ्गीकारेण तन्निकटे ब्रह्मजिज्ञासूनां तेषां गमनस्यैवासम्भावितत्वेन तद्गमनप्रतिपादकश्रुतेरुक्तवैयर्थ्यापत्तिरनिवार्यैव ।

एतेन रुद्रे परमात्मत्वभ्रान्त्यापाततो रुद्रमविज्ञाय विशेषतो जिज्ञासया तद्दिदृक्षया च देवाश्शिवलोकमगमन्नित्येतत्, तथा ब्रह्मनिष्ठः क्वचिद्वर्तत

इत्यज्ञात्वैवान्वेषणे कृते यत्र क्वापि कश्चन ब्रह्मनिष्ठो लप्स्यते सोऽस्मान्बो-धयिष्यतीति ब्रह्मनिष्ठमन्विष्यन्तो देवा यदृच्छया शिवलोकमगमन्नित्येतच्च निरस्तम् । त्वन्मते रुद्रस्य तामसत्वाङ्गीकारेण तामसादुपदेशं प्राप्तानां तत्त्वज्ञानासम्भवात् । "अथ यो ह खलु वास्य तामसोंऽशोऽसौ स योऽयं रुद्र" इति श्रुतिं भारतादिवचनानि चोदाहृत्य तदनुसारेण शिवस्य सदा तामसत्वमेवेति त्वदुक्तेस्सुप्रसिद्धत्वात् । रुद्रोपदेशेन तेषां तत्त्वज्ञानं न जातमित्यङ्गीकारे अस्यामुपनिषदि द्वितीयादिखण्डचतुष्ट-यात्मकस्य रुद्रोपदेशेन देवानामुत्पन्नतत्त्वज्ञानज्ञापकसन्दर्भस्योपरोधापत्तेः । किञ्चाऽऽद्यपक्षे देवान्प्रति शिवेन "अहमेकः प्रथममास "मित्याद्युपदेशे कृते शिवः स्वगतमेव त्रिषु कालेषु विद्यमानत्वान्तर्यामित्वादिकं वक्तीति ते निश्चिनुयुः । परमात्मनिष्ठासाधारणधर्मास्सर्वे शिवस्यैवोचितास्ते धर्मास्सर्वेऽस्माभिः ज्ञेया इति भ्रान्तिरूपस्य वा निश्चयस्य वा तेषां सत्त्वात् । द्वितीयपक्षे निकटस्थसर्पिमूर्तीन्विहाय तेषां तावद्दूरगमन-सम्भावितमित्युक्तदोषस्य सिद्धत्वात् । अत्र ब्रह्मनिष्ठोऽस्ति वेति तत्र तत्र विचारिते सँ विदितो भवत्येवेति निकटस्थान् ब्रह्मनिष्ठानज्ञात्वा शिवलोक-गमनमिति कल्पनस्यासम्भवात् । लोके ब्रह्मनिष्ठश्शिवस्तिष्ठतीति ज्ञानस्यापि विचारलभ्यत्वात् । शिवलोकं गतानां यथा तामस्या शिवज्ञानं तत्सामग्र्यान्यब्रह्मनिष्ठज्ञानं सम्भवत्येवेति समानत्वात् ।

किञ्च द्वितीयपक्षे शिवलोकं गतानां तेषां शिवे प्रभावातिशयदर्शनेन किमयं परमात्मा वा ब्रह्मनिष्ठो वान्यो वेति संशयापत्त्या तत्संशयेन कृतप्रश्ने उत्तरवाक्यस्य रुद्रान्तर्यामिपरत्वे प्रश्नोत्तरयोर्वैयधिकरण्यप्रसङ्गः । अपि च पक्षद्वये देवास्तत्र गत्वा रुद्रोऽयमिति वा ब्रह्मनिष्ठोऽयमिति वा शिवं नाजानन्नेवेति रुद्र स्वस्मिन्भ्रान्तत्वानिश्चयविधुरान् मत्युपदेशं न करोत्येवेति सोऽब्रवीदित्याद्युपदेशश्रुतेरुपरोधापत्तिः ।

न च शिव एतादृशरूपवानिति निश्चयस्तथा तत्समानरूपस्तल्लोके कोऽपि नास्तीति निश्चयश्शिवलोकगमनात्प्राक् तेषामासीत्, तत्र गतास्ते शिवसमानरूपमन्यं नापश्यंस्तनाश्शिवोऽयमिति ज्ञानं तेषां सम्भवतीति

वाच्यम् । तेषां शिवसमानरूपोऽन्यस्तत्र नास्तीति भ्रान्तिकल्पना तल्लोकं गतान्ते शिवसमानरूपमन्यं नापश्यन्निति कल्पना चासङ्गतैव; गौरवान्मानाभावात् । शिवोऽयमिति ज्ञाते को भवानिति प्रश्नानुपपत्तेश्च । सिद्धान्तपक्षे तत्कल्पनाद्वयं विनैव तत्सन्दर्भस्योपपन्नत्वात् ।

ननु परमात्मानं विष्णुं सामान्यतो विज्ञाय विशेषतस्तत्स्वरूपजिज्ञासया तद्दिदृक्षया च देवा विष्णुलोकं गच्छन्तो मध्येऽवस्थितरुद्रे प्रभावातिशयदर्शनेन सन्दिहानाः किं भवान्परमात्मा विष्णुः किं वास्मदादिवत्सातिशयदेवविशेषो वेत्यपृच्छन्निति चेन्न । श्यामरूपशङ्खचक्रगदापद्मश्रीवत्सकौस्तुभादिप्रसिद्धविष्णुचिह्नेषु कस्यचिदप्यदर्शनेन शिवे धवलरूपत्वनीलकण्ठत्वत्रिनेत्रत्वनागभूषणत्वादिविरुद्धचिह्नानां दर्शनेन च किमयं विष्णुरन्यो वेति संशयस्यैवाप्रसक्त्या शिवदर्शनेन को भवानिति प्रश्नस्यैवासम्भवेन प्रश्नवाक्ये प्रागुक्तानर्थक्यापत्तेः । किञ्च शिवलोकस्यार्चिरादिमार्गेऽनाम्नाततया तस्य विष्णुलोकमार्गत्वाभावेन विष्णुदिदृक्षया विष्णुलोकगन्तॄणां तेषां शिवलोकगमनासम्भवेन तेषां तल्लोकगमनप्रतिपादकवाक्यस्यानर्थक्यापत्तेः । "स्वर्गं लोक" मिति वाक्यं तेषां शिवलोकगमनप्रतिपादकमिति दर्शितत्वात् ॥ न च देवा विष्णुलोकभ्रान्त्या विष्णुलोकमार्गभ्रान्त्या वा शिवलोकमगमन्निति वाच्यम् । तेषां भ्रान्तिकल्पनगौरवं विनैव एतत्सन्दर्भस्योपपन्नत्वेन तेषां तद्भ्रान्तिकल्पने मानाभावात् ।

अपि चात्र समान्यतो विष्णुज्ञानं विशेषतो विष्णुजिज्ञासा विष्णुदिदृक्षा चेत्येतत्त्रयं त्वयाङ्गीकार्यम् । सामान्यतश्शिवस्वरूपज्ञानं विशेषतश्शिवस्वरूपजिज्ञासा शिवमूर्तिदिदृक्षा चेत्येतत्त्रयं सिद्धान्तेऽङ्गीकृतमित्यस्य समानत्वेन "ते देवा रुद्रमपृच्छ" न्निति प्रश्नान्यथानुपपत्त्या देवानां शिवमूर्तिविषयकदर्शनकल्पनस्योपपत्त्यादिसिद्धत्वेन चैतावतैव प्रश्नमूलभूतस्य किमयं शिवो वान्यो वेति संशयस्योपपत्त्या तत्प्रश्नमूलभूतसंशयसिद्धये ते रुद्रे प्रभावातिशयं दृष्टवन्त इति कल्पने मानाभावेन त्वदभिमतसंशयस्यासम्भवेन को भवानित्यस्य किं भवान् देवो वा दानवोऽन्यो वेत्यर्थकत्वापत्त्या प्रश्नोत्तरयोर्वैयधिकरण्यापत्तिः ।

किञ्च देवाश्शिवं विज्ञाय शिवलोकमगमन्वा ? शिवं विष्णुं च विज्ञाय वा ? शिवमविज्ञायैव वा ? रुद्रमेकमेव विज्ञायागमन्निति कल्पनेनैवास्य सन्दर्भस्योपपन्नत्वेन विष्णुशिवावुभौ विज्ञायागमन्निति कल्पने मानाभावात् । एकरुद्रदिदृक्षयैवागमन्निति कल्पनेनैवोपपत्तौ विष्णुरुद्रोभयदिदृक्षयागमन्निति कल्पने मानाभावाच्च । अपि च विष्णुं रुद्रञ्च विज्ञाय तदुभयदिदृक्षयागमन्नित्यस्य रुद्रे प्रभावातिशयदर्शनस्य चाङ्गीकारेऽपि रुद्रे प्रसिद्धविष्णुचिह्नस्य कस्याप्यदर्शनेन तद्विरुद्धविह्नानां नीलकण्ठत्वादीनां दर्शनेन चातीव प्रबल किमयं रुद्रोऽन्यो वेति देवानां संशयापत्त्या तदिष्टसंशयस्यातिदृढ्या च प्रश्नोत्तरयोरुक्तवैयधिकरण्यापत्तिरनिवार्यैव । किञ्च ब्रह्मोपदेष्टाय ब्रह्मण्यभ्रान्त एवेति देवानां निश्चयाभावेन रुद्रः स्वस्मिन् तदभ्रान्तत्वनिश्चयविधुरान्देवान्प्रत्युपदेशं न करोत्येवेति "अहमेकः प्रथममास" मित्याद्युपदेशश्रुतिवैयर्थ्यरूपपूर्वोक्तदोषापत्तिः ।

नन्पदेष्टरि शिवे उपदेशानन्तरमयं शिव एवेति देवानां निश्चयकल्पनस्य सिद्धान्तेऽप्यावश्यकत्वेन, "अपाम सोममृता अभूमे" त्यादौ देवानां ब्रह्मोपदेशप्रयुक्तसन्तोषाभिधानान्यथानुपपत्त्या तेषां रुद्रे ब्रह्मविषयकभ्रान्तिराहित्यनिश्चयकल्पनसम्भवेन न रुद्रकर्तृकब्रह्मोपदेशानुपपत्तिरिति चेन्न । यस्त्रिषु कालेष्ववस्थितः परमात्मा स रुद्रादिशब्दार्थ इति निश्चित्य शिवान्तिकं गतान् देवान्प्रति शिवेन स्वस्य सकलकालसत्त्वेऽभिहिते ते देवाः साधनान्तरकल्पनमनपेक्ष्य तस्मिन् शिवे तेषां शिवत्वनिश्चयसम्भवत्वेवेति तेनैव देवकर्तृकसन्तोषाभिधायकस्य अपाम सोममित्यादिसन्दर्भस्यान्यथानुपपत्तेः प्रसक्त्यभावेन साधनान्तरं प्रकल्प्य शिवे देवकर्तृकतदभ्रान्तत्वनिश्चयस्य कल्पने गौरवान्मानाभावाच्च । त्वन्मते शिवेन स्वान्तर्यामिरूपपरमात्मन उपदेशानन्तरं देवानां शिवे तदभ्रान्तत्वनिश्चयकल्पनाय तन्निश्चयहेतुभूतमयं शिव इति केनचिद्वाभिज्ञेनाभिहितं वाक्यं वा योगजसामर्थ्यं वावश्यं कल्पनीयमिति तत्कल्पने गौरवस्य मानाभावस्य विस्पष्टत्वात् । गौतमकाणादपातञ्जलतन्त्रानुसारिणो माध्वरामानुजश्रीकण्ठाचार्यमतानुसारिणोऽद्वैतमतानुसारिणश्च एवंरूपमेव ब्रह्म एवंरूपमेव ब्रह्मेत्यनेकविधं वर्णयन्तीति

तेष्वेकस्यैव यथार्थवादिताया अन्येषां भ्रान्तताया्श्चावश्य वक्तव्यत्वेन ब्रह्म-विन्मानिनामेतेषां बहूनां ब्रह्मण्यभ्रान्तप्रतियोगिनां दृष्टत्वेन इन्द्रविरोचनौ ब्रह्मणा सर्वज्ञेनोपदेशं प्राप्यापि ब्रह्मणि भ्रान्तौ बभूवतुस्तत्रेन्द्रोऽनेकवारं भ्रान्तिं प्राप्य पश्चात्सम्यग्ज्ञानवानित्यस्य, ब्रह्मविन्मानी विदग्धशाकल्यो याज्ञवल्क्येन ब्रह्मविषये पृष्ट उत्तरं वक्तुं न ज्ञातवानित्यादेश्च छान्दोग्य-बृहदारण्यादौ श्रुतत्वेन,

"अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः ।
दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः" ॥

इति श्रुत्या ब्रह्मण्यभ्रान्तप्रतियोगिनो बहवस्सन्तीत्यवगमेन च देवानां शिवेऽभ्रान्तत्वनिश्चयकल्पनं त्वन्मते आवश्यकमित्युक्तं युक्तमेव । न हि देवान्प्रति शिवकर्तृकोपदेशानन्तरं देवानां किमयं कश्चिद्भ्रान्तः "अहमेकः प्रथममास" मित्यादिकमस्मान्प्रत्युपदिष्टवान् ? किं वा शिव एवेति संशयसम्भवेन तेषां शिवे सकलकालसत्त्वादिविषयकभ्रान्तिराहित्य-कल्पनं सिद्धान्तेऽपि समानमिति शङ्कयं सकलजगत्सृष्टेः प्राक् अहमेव एवासमधुना सर्वरूपेण वर्ते अहमेक एव भविष्यामि सर्वलयानन्तर-मधुना सर्वान्तर्यामिरूपेण सर्वप्रेरकश्चाहमिति भ्रान्तेरनुन्मत्तस्य कस्याप्य-दर्शनेनानुन्मत्तस्य प्राचीनस्य कस्याप्यश्रुतत्वेन च देवानां किमयं भ्रान्तो वा शिवो वेत्युक्तसंशयस्यैवासम्भवात् । उन्मत्तत्वस्य रोगविशेषत्वेन स्वर्गलोकस्थितानां रोगरूपोन्मत्तत्वाभावादिति हेतुना हेत्वन्तरेण वा देवानां शिवे उन्मत्तत्वाभावनिश्चयकल्पनं, तथानृतवदनजन्यपापस्य प्रबल-ताया "नानृतात्पातकम्पर" मित्यादिवचनसिद्धत्वेन प्रबलपापवतां स्वर्गेऽव-स्थानासम्भवादिति हेतुना हेत्वन्तरेण वा देवानां शिवेऽनृतवादित्वाभाव-निश्चयकल्पनञ्चोभयवादिनोरपि समानम् ।

तृतीये शिवमविज्ञायैव शिवलोकं गत्वा तत्रायं शिव इति ज्ञातवन्तो न वा । नाद्यः—ज्ञाते को भवानिति प्रश्नानुपपत्तेरित्युक्तत्वात् । न च ब्रह्मविष्णुत्वेन ज्ञातं रुद्रं प्रत्यपि भवदन्तर्यामी क इति रुद्रान्तर्यामि-विषयकप्रश्नस्सम्भवतीति वाच्यम् । तत्प्रश्नस्य शिवान्तर्यामिपरत्वे

त्वदीयैर्ग्रन्थकृभ्दिमस्सर्वे . रुद्रे प्रमावातिशयदर्शनेन सन्दिहाना देवाः किं भवान् परमात्मा वा सातिशयदेवविशेषो वेति अपृच्छन्नित्युक्त्वा तदुक्तचनुगुणतयैवैतदुपनिषत्सर्वापि व्याख्यातेति तद्विरोधापत्तेः ।

किंच शरीरवाचकानां भगवच्छब्दाश्मच्छब्दादीनामन्तर्यामिपरत्व-मप्यस्तीति व्युत्पत्तेरेव देवानामभावेन को भवानिति प्रश्नस्यान्तर्यामिपरत्वा-भाव. कैमुतिकन्यायसिद्ध एव । तद्व्युत्पत्त्यभावश्च तेषां सोऽन्तरादित्युप-देशात्प्राक् अन्तर्यामित्वेनान्तर्यामिज्ञानाभावादेव सिद्ध । तदुपदेशात्प्राक् तेषामन्तर्यामित्वेनान्तर्यामिज्ञानाभावश्च तेषां तज्ज्ञानकल्पनाभावेऽस्य सन्द-र्भस्यानुपपत्तिलेशस्याप्यभावेन तेषां तज्ज्ञानकल्पने मानाभावात् तेषामग्रे सोऽन्तरादित्यन्तर्याम्युपदेशवैयर्थ्यात् गौरवाच्च सिद्धः ।

न च शरीरवाचकभवच्छब्दादीनां शरीराभिमानितदन्तर्याम्यु-भयपरत्वं, समानमिति सिद्धत्वेन देवैरुभयपराभवच्छब्दप्रयोगात्तेषां ता व्युत्पत्तिरस्तीत्यनुमातुं शक्यमिति वाच्यम् । भवच्छब्दादीनामुभयपरत्वे मानाभावात् । अस्तु वोभयपरत्वं तथापि यथा सैन्धवशब्दस्यानेकार्थत्वेऽप्य-श्वशब्दार्थमजानन. पुरुषस्य सैन्धवशब्दोऽश्वपरोऽपीति व्युत्पत्ति-कल्पनमसम्भावितं तस्याश्वशब्दार्थज्ञानाभावादेव, तथान्तर्यामिणमजानतां तेषां शरीरवाचकभवच्छब्दाश्मच्छब्दादयोऽन्तर्यामिपरा अपीति व्युत्पत्ति-कल्पनमसम्भावितमेव, तेषामन्तर्यामिज्ञानाभावादेव ।

न च तर्हि देवानां देहव्यतिरिक्तात्मज्ञानकल्पने मानाभावेन देहवाचकभवच्छब्दादयो देहव्यतिरिक्तात्मपरा इति व्युत्पत्तिर्न स्यादिति वाच्यम् । अत्रोपदिष्टब्रह्मविद्यायामधिकारिणां तेषामधिकारसिद्धये वैराग्य-स्यावश्यकत्वेन देहव्यतिरिक्तात्मज्ञानं विना वैराग्यस्यासम्भवेन देहव्यतिरि-क्तात्मज्ञानस्य सिद्धत्वेन तेषां देहवाचकभवच्छब्दादयो देहव्यतिरिक्तात्मपरा इति व्युत्पत्तेरसिद्धत्वात् । अतस्तेषां तदुपदेशात्प्राक् अन्तर्यामित्वेना-न्तर्यामिज्ञानाभावस्तद्व्युत्पत्त्यभावश्च सिद्ध एवेति शिवलोकगतैस्तैर्दिशिवे ज्ञाते तं प्रति को भवानिति प्रश्नानुपपत्तिरसिद्धैव ।

न द्वितीयः—यज्ञाते तदभ्रान्तत्वनिश्चयविधुरान् देवान्प्रति शिवकर्तृको-पदेशानुपपत्तेरित्युक्तदोषस्यानिवार्यत्वात् ।

एतेन सर्वान्तर्यामिरूप परमात्मा कश्चिदस्तीति परमात्मत्वेन परमात्मानं विज्ञाय विशेषतस्तत्स्वरूपजिज्ञासया रुद्रलोकं गत्वा तत्रावस्थितरुद्रे प्रभावातिशयदर्शनेन सन्दिहाना देवा. को भवानित्यपृच्छन्निति कल्पनञ्च निरस्तम्। तत्र देवा विशेषत परमात्मजिज्ञासया शिव प्रष्टुं शिवो वदिष्यतीति शिवं विज्ञाय शिवलोकमगमन्निति वा ब्रह्मनिष्ठमन्विष्यन्तो यदृच्छया शिवलोकमगमन्निति वा वक्तव्यत्वेन तत्पक्षद्वयस्य शिवे प्रभावातिशयदर्शनस्य च दूषणपरम्परामस्ततायाः प्रदर्शितत्वात्। तथा चास्याथर्वशिरस' शिवान्तर्यामिपारम्यपरत्वे "देवा ह वै स्वर्गं लोकमगम"-न्नित्यत्रावगतस्य देवाना शिवलोकगमनस्योद्देश्यालाभेनास्य शिवपारम्यपरत्वमेवेति सिद्धान्ते तु शिवदर्शनमेवोद्देश्यमिति सुवचत्वेन चास्याथर्वशिरसः सर्वव्यापिशिवपारम्यपरत्वं सिद्धमेव।

एवं पराभिमतस्य को भवानिति प्रश्नहेतुभूतसंशयस्यासिद्ध्या-प्यस्याथर्वशिरसस्सर्वव्यापिशिवपारम्यपरत्व सिद्ध्यति। तत्र देवाना शिवे प्रभावातिशयदर्शनकल्पनोन्मेषासम्भवस्य प्रदर्शितत्वेन शिवे प्रभावातिशयदर्शनासिद्धौ पराभिमतसंशयविषयीभूतेश्वरत्वकोटयुन्मेषाभावेन तदसिद्धौ किमयमीश्वरो वा सातिशयदेवविशेषो वेति पराभिमतसंशयासिद्धेर्विस्पष्टत्वात्। परमते देवाना शिवलोकगमनस्यैवासिद्ध्या तदसिद्धौ तेषा शिवदर्शनस्यैव प्रसक्त्यभावेन शिवदर्शननिमित्तकपराभिमतसंशयप्रसक्त्यभावस्य कैमुतिकन्यायसिद्धत्वाच्च। एतत्पराभिमतसंशयासिद्धौ को भवानिति प्रश्नवाक्यस्योत्तरत्वेन प्रवृत्तसन्दर्भस्य च पराभिमतार्थकत्वासिद्ध्या अस्याथर्वशिरसस्सर्वस्यापि शिवपारम्यपरत्वेऽनुपपत्तिलेशस्याप्यभावेन च तस्य शिवपारम्यपरत्वं सिद्धमेव।

एवं को भवानिति प्रश्नोत्तरतया प्रवृत्तेन "अहमेक प्रथममासं वर्तामि च भविष्यामि च नान्य' कश्चन मत्तो व्यतिरिक्त इती"ति शिववाक्यसन्दर्भेण दर्शित जगत्कारणत्व किं भवद्रत्वाभिप्रायकम् [?] भवदन्तर्यामिपरत्वमस्तीति व्युत्पत्तिप्रसक्तिरेव देवाना नास्तीत्यस्यानुपदमेव दर्शितत्वेन तेषा तद्व्युत्पत्तिप्रसक्तेरेवाभावे अहमेक प्रथममासमित्यादावस्मच्छब्दश्रवणेन तेषामत्रत्यास्मच्छब्द किं भवत्परो वा भवदन्तर्यामिपरो

त्वेनि संशयप्रसक्त्यभावस्य कैमुतिकन्यायसिद्धत्वादिति "अहमेकः प्रथम-मास"मित्यादिना प्रदर्शितजगत्कारणत्वस्य शिवगतत्वावश्यम्भावेन एतदुत्तर-सन्दर्भस्य एतदनुसरणीयताया आवश्यकत्वेन च "अहमेकः प्रथममास" मित्यादौ परपरिकल्पितसंशयस्य प्रसक्त्यभावादप्यस्याथर्वशिरसस्सर्वस्यापि शिवपारम्यपरताया अनिवार्यत्वात् ।

एवमहमेकः प्रथममासमित्यादौ पराभिमतशङ्काङ्गीकारेऽपि तच्छङ्काया-स्सोऽन्तरादिति वाक्येन परिहारासम्भवादप्यस्याथर्वशिरसस्सर्वस्यापि शिव-पारम्यपरत्वं सिद्ध्यति ।

ननु सोऽन्तरादित्यत्रत्यतच्छब्दस्सुबालोपनिषदि सर्वान्तर्यामित्वेनाभिहि-तनारायणपर इत्यस्यावश्यं वक्तव्यत्वेन "सोऽन्तरादन्तरं प्राविश"दिति सर्वान्तर्यामिणो नारायणस्य शिवेन स्वस्मिन्ननुप्रवेशेऽभिहिते दर्शितजग-त्कारणत्वमन्तर्यामिगतमिति देवानां निश्चयसंभवेनोक्तशङ्कानिरासस्सम्भव-त्येवेति कथं तच्छङ्कानिरासस्यासम्भवाभिधानमिति चेन्न । विकल्पासह-त्वात् । सोऽन्तरादित्यत्र तच्छब्दः सुबालोपनिषदन्तर्यामित्वेनोक्तनारायण-पर इति देवानां निश्चयसिद्धये तेषां सुबालोपनिषदोऽध्ययनं तदर्थनिर्ण-श्चेत्येतद्द्वयं कल्प्यते वा न वा ? नान्त्यः—तत्कल्पनाभावे तेषां सोऽन्त-रादिति वाक्यश्रवणमात्रेण तत्रत्यतच्छब्दस्सुबालसन्दर्भोक्तान्तर्यामिपर इति निश्चयस्य प्रसक्त्यभावात् । नाद्यः—तेषां तदुभयकल्पनाभावेऽप्येतत्स-न्दर्भेऽनुपपत्तिलेशस्याप्यभावेन तेषां तदुभयकल्पने गौरवान्मानाभावाच्च । किञ्चास्यामुपनिषदि सङ्ग्रहेणोपदर्शितं सर्वकारणत्वं सर्वान्तर्यामित्वं किञ्चिद्विस्तरेणाभिहितं सार्वात्म्यञ्चेत्येतत्त्रयं तत्सुबालोपनिषदि सङ्ग्रहेणात्य-न्तविस्तरेण च बहुधाभिहितमित्येतत्त्रयग्रहाभिधानेन तदपेक्षयात्र विशेषस्या-भावेनात्र एतत्त्रितयस्य तान्प्रति अत्रोपदिष्टत्वे तदुपदेशस्यात्यन्तवैयर्थ्यमनि-वार्यमेव ।

न च तेषां देवानां व्युत्पत्तेर्मन्दतया तैस्सुबालोपनिषदर्थस्सर्वोऽपि सम्यक् न बुद्धः । किन्त्वन्तर्यामिपरसन्दर्भोऽपि एव सम्यग्विदितः ।

तेनैव सोऽन्तरादित्यादिवाक्यश्रवणमात्रेण तत्रत्यतच्छब्दस्य सुबालोपनिषदभिहितान्तर्यामिपर इति ज्ञानं तेषां सम्भवत्येवेति नोक्तदोषावकाश इति वाच्यम्। मन्दव्युत्पन्नानां तेषामथर्वशिरसि शिववाक्यसन्दर्भस्यार्थज्ञानासम्भवेनोक्तोपदेशानुपपत्तेर्दृढीकरणप्रसङ्गात्।

किञ्च मन्दव्युत्पन्नैर्देवैरन्तर्यामिप्रतिपादकसन्दर्भस्सम्यग्विदितो वा न वा! नाद्यः—मन्दव्युत्पन्नैस्तैस्सुबालोपनिषदन्तर्यामिपरसन्दर्भार्थ एव सम्यग्विदित, न [redacted] कृत्स्नसुबालोपनिषदर्थ इत्यत्र विनिगमकाभावात्। न द्वितीय —तज्ज्ञानाभावे सोऽन्तरादित्यत्रत्यतच्छब्दस्सौबालसन्दर्भोक्तान्तर्यामिपर इति तेषां निश्चयस्य शक्यभावात्। न हि स्वेनोक्तसन्दर्भस्यार्थमपि देवानप्रत्युक्तवान् शिव इति शङ्कितुं शक्यम्। तथात्वे अहमेक प्रथममासमित्यत्र देवानां त्वदभिमतसंशयानुपपत्तेर्दृढीकरणप्रसङ्गात्। सोऽन्तरादित्यत्रत्यतच्छब्दार्थज्ञानाय तेषां सुबालोपनिषदध्ययनादिकल्पनस्य वैयर्थ्यगौरवयोरापत्तेश्च।

किञ्च देवानां सुबालोपनिषदन्तर्यामिपरसन्दर्भार्थविषयकसम्यग्ज्ञानाङ्गीकारे "अहमेकः प्रथममास"मित्यादौ त्वदभिमतसंशयस्य निरसनहेतुत्वेन सोऽन्तरादिति वाक्यस्य सार्थक्येऽपि "दिशश्चान्तरं समाविशदि" त्युत्तरवाक्यवैयर्थ्यापत्ते।

न च देवैस्सुबालोपनिषदन्तर्यामिणि विज्ञानेऽपि तेषां तज्ज्ञानदृढीकरणायाथर्वशिरसि दिशश्चान्तरमित्युपदेशस्सार्थक इति वाच्यम्। सुबालोपनिषदि "एषोऽन्तर्याम्येष योनिस्सर्वस्ये"ति स एव सर्वभूतान्तरात्मेति चात्यन्तविस्पष्टार्थवद्भ्यां सङ्ग्रहसन्दर्भाभ्यां "यश्चक्षुषि यो द्रष्टव्य" इत्यादिकं "य पृथिव्यां तिष्ठती" त्यादिकञ्चेत्येताभ्यामत्यन्तविस्पष्टार्थवद्भ्यामतिविस्तृतसन्दर्भाभ्याञ्च दृढीभूतोऽर्थ अविस्पष्टार्थकेनातिसङ्क्षिप्तरूपेण "दिशश्चान्तरं संप्राविश" दिति वाक्येन दृढो भवतीति वक्तुरतिवक्रतायाः विस्पष्टत्वात्।

अपि च देवानां सोऽन्तरादित्यत्रत्यतच्छब्दस्य सौबालसन्दर्भोक्तान्तर्यामि-परत्वज्ञानसिद्धये तेषां मन्दव्युत्पत्तिकल्पनं सुबालोपनिषदध्ययनकल्पनं तदर्थविषयकापातज्ञानकल्पनञ्चेत्येतानि कल्पनानि विनोपपन्नस्य शिववचनसन्दर्भस्यानुपपत्तिलेशस्याप्यभावेनात्यन्तगुरुभूतेषूक्तकल्पनेषु माना-भावात्, सौबालाक्षरमात्रविषयज्ञानमस्तीति कल्पने मानाभावाच्च तत्कल्पनं विनैव तत्सन्दर्भस्योपपन्नत्वात्।

ननु परमात्मानमन्तर्यामित्वेन विज्ञाय शिवनिकटमाप्याहमेक इत्यादिश्रवणेन सन्दिहानान् देवान्प्रति यः परमात्मान्तर्यामित्वेन ज्ञातो भवद्भिरहमेकः प्रथममिति वाक्योत्थसंशये भवदुक्तजगत्कारणत्वं किं भवदन्तर्यामिगतं वेति कोटिविषयीभूतश्च सोऽन्तरादन्तरं प्राविशदित्युक्तवान् शिव इति किं न स्यात्। अथ वा विष्णुमन्तर्यामित्वेन जानन्तश्शिव-निकटं प्राप्याहमेक इत्यादिश्रवणेन सन्दिहानान् देवान्प्रति यो विष्णुरन्तर्या-मित्वेन ज्ञातो भवद्भिरहमेकः प्रथममिति वाक्योत्थसंशये भवदुक्त-जगत्कारणत्वं किं भवदन्तर्यामिगतं वेति कोटिविषयीभूतश्च सोऽन्तरादन्तरं प्राविशदित्युक्तवान् शिव इति किं न स्यादिति चेन्न। एतत्पक्षद्वये सोऽन्तरादित्यत्रत्यतच्छब्दस्तौबालप्रसिद्धान्तर्यामिपर इति त्वदुक्तविरोधापत्तेः। एतत्पक्षद्वयस्यापि दूषणपरम्पराभिधानेनानुपदमेव निरस्तत्वाच्च। सोऽन्तरादित्यतः पूर्ववाक्योपस्थितार्थे परोक्षत्वविवक्षायास्त्वयाप्यङ्गीकारेण तत्रिबन्धनैव परोक्षत्वविवक्षायां सोऽन्तरादिति तच्छब्दप्रयोगसम्भवतीत्यस्याग्रे निपुणतरं वक्ष्यमाणत्वाच्च। अतस्सोऽन्तरादित्यत्र तच्छब्दस्याव्यवहित-पूर्ववाक्योपस्थितार्थपरत्वं विनान्यपरत्वस्य प्रसक्त्यभावेन सोऽन्तरादिति वाक्यस्य त्वदभिमतशङ्कानिवर्तकतायाः प्रसक्त्यभावेनैवास्याथर्वशिरसत्व-दभिमतशङ्कानिवर्तकत्वासम्भवादप्यस्याथर्वशिरसस्सर्वस्यापि शिवपारम्यपरत्वं सिद्ध्यतीत्येतन्निष्प्रत्यूहम्।

एवमुपक्रमाधिकरणन्यायेन सोऽन्तरादित्यस्य शिवपरत्वादप्यथर्वशिर-सश्शिवपरत्वमेव। तत्राहमेक इत्यादिप्रथमश्रुतवाक्यस्य स्वार्थपरत्वेऽस-ञ्जातविरोधिन्यप्रथमश्रुतसोऽन्तरादित्यादिवाक्यानुसारेण प्रश्नरूपोपक्रमस्यान्य-थानयनाभावेन कोऽत्रोपक्रमाधिकरणविरोध इति [न] वक्तुं शक्यः।

असञ्जातविरोध्यनुसारेण सञ्जातविरोधिनो नयनमिति तदधिकरणसिद्धान्तस्य सिद्धत्वेन तदपहायात्राहमेकः प्रथममासमित्याद्यसञ्जातविरोधिनः सोऽन्तरादित्यादिसञ्जातविरोध्यनुसारेण नयने उपक्रमाधिकरणविरोधस्य विस्पष्टत्वात् । "अहमेकः प्रथममास"मित्यादिवाक्यस्य स्वार्थपरत्वे तस्य तद्वाक्यात् प्राक् विरोध्यभावेन अहमेक इत्यस्यासञ्जातविरोधित्वात् सोऽन्तरादित्यादिवाक्यस्य स्वार्थपरत्वे तस्य तद्वाक्यात्पूर्वमहमेक इत्यादिवाक्यरूपविरोधिसद्भावेन सोऽन्तरादिति वाक्यस्यासञ्जातविरोधित्वात् । प्रत्युत सोऽन्तरादिति चरमश्रुतवाक्यमेवोपमृद्याहमेक इत्यादिप्रथमश्रुतवाक्याङ्गस्यानुसारेण नयनस्यैव युक्तत्वेन सोऽन्तरादित्यादिवाक्यस्य शिवपरत्वमेव युक्तम् । अन्यथा उपक्रमाधिकरणविरोधस्य परिहाराभावात् । एवं सोऽन्तरादित्यत्रत्यतच्छब्दस्य स्वारसिकार्थलाभेन च सोऽन्तरादिति वाक्यस्य शिवपरत्वादप्यथर्वशिरसाशिवपारम्यपरत्वमेवोचितम् । तत्राव्यवहितपूर्वोपस्थितार्थस्यैव तच्छब्दस्वारसिकार्थत्वेन सोऽन्तरादित्यत्रत्यतच्छब्दस्य तदव्यवहितपूर्ववाक्योपस्थितार्थपरत्वे सम्भवति तदपहाय सुबालोपनिषदादिश्रुत्यन्तरे उपस्थितार्थपरत्वकल्पनाया अत्यन्तान्याय्यत्वात् । अव्यवहितपूर्ववाक्योपस्थितार्थेन शान्ताकाङ्क्षस्य सोऽन्तरादित्यत्रत्यतच्छब्दस्य केनचिदपि वाक्येनोपस्थितार्थाकाङ्क्षाविरहे तथा सुबालोपनिषदादिश्रुत्यन्तरोपस्थितान्तर्यामिरूपार्थस्य सोऽन्तरादित्यत्रत्यतच्छब्देनान्वयाकाङ्क्षाविरहे च सोऽन्तरादित्यत्रत्यतच्छब्दस्य श्रुत्यन्तरोपस्थितार्थपरत्वकल्पनाया अपहासार्हत्वात् ।

न च सोऽन्तरादित्यस्य शिवान्तर्यामिपरत्वेऽपि तदव्यवहितपूर्ववाक्योपस्थितार्थपरत्वं सोऽन्तरादित्यत्रत्यतच्छब्दस्य सम्भवत्येवेति तत्रत्यतच्छब्दस्य स्वारसिकार्थलाभस्समान एवेति वाच्यम् । सोऽन्तरादित्यतः प्राक्तनसन्दर्भे शिवान्तर्यामिपरत्वाभावस्य शिवपरत्वस्य च दर्शितत्वेन एतच्छब्दस्याव्यवहितपूर्वपरामर्शित्वे सोऽन्तरादित्यस्य शिवपरत्वावश्यम्भावेन त्वदिष्टसिद्धेरवकाशाभावात् । तच्छब्दोऽयं सुबालप्रसिद्धान्तर्यामिपर इति त्वदुक्तिविरोधश्च ।

एवं सन्दशन्यायेनापि सोऽन्तरादिति वाक्यस्य शिवपरत्वमेव । एवं सोऽन्तरादिति वाक्यस्य स्वरसतःशिवपरवाक्यमध्यगतत्वात् । एवं सोऽन्तरादिति वाक्यस्य शिवपरत्वमेभूयसामनुग्रह इति न्यायेन च सोऽन्तरादिति वाक्यस्य शिवपरत्वमे- बोधितम् । अस्मिन्नथर्वशिरसि बहूनां वचनानामाञ्जस्येनैव शिवपरत्वेन सोऽन्तरादिति वाक्यस्य तदनुसारेण नयनस्यावश्यकत्वात् स्वरसत एव शिवपरबहुवचनानुसारेण सोऽन्तरादिति वाक्यस्यैकतच्छब्दबाधस्यैव युक्तत्वात् । बहुबाधापेक्षया एकबाधस्योचितत्वात् ।

एवं "सोऽन्तरादन्तरं प्राविशाद्दिशश्चान्तरं संप्राविश"दिति परोक्षत्वेनाभिहितान्तर्यामिणस्संप्राविशादित्येतत्समनन्तरं सोऽहमिति शिवः स्वस्मादभिन्नत्वमनूदितवानित्यनेनापि सोऽन्तरादित्यस्य शिवपरत्वं सिद्धम् । सोऽहमित्यत्रस्थतच्छब्दस्याव्यवहितस्य पूर्वोपस्थितान्तर्यामिणं विनान्यपरामर्शित्वस्यान्याय्यत्वात् । तच्छब्दाहंशब्दयोस्सामानाधिकरण्ये सम्भवति वैयधिकरण्यस्यायुक्तत्वात् । अहंशब्दस्य वक्तृपरतायास्सुप्रसिद्धत्वात् । वक्ता चात्र शिव एवेति विस्पष्टत्वात् । देवानामस्मच्छब्दोऽन्तर्यामिपरश्चेति व्युत्पत्त्यभावस्य दर्शितत्वात् । एवं "सन्दिग्धो वाक्यशेषा"दिति न्यायेन सोऽन्तरादिति वाक्यस्य शिवपरत्वमेवोचितम् । सोऽन्तरादिति वाक्यस्य शिवान्तर्यामिपरत्वं शिवपरत्वं वेति सन्देहे सोऽहं नित्यानित्य इत्यादीना स्वरसतश्शिवपरवचनाना सन्दर्भरूपवाक्यशेषत्वं, तथा

"यो रुद्रोऽग्नौ यो अप्स्वन्तर्य ओषधीर्वीरुध आविवेश ।
स इमा विश्वा भुवनानि चक्लृपे तस्मै रुद्राय नमो अस्तु" ॥

इति वाक्यशेषस्य च व्यक्तत्वात् । यो रुद्रोऽग्नाविति वाक्ये अग्न्यप्स्वन्तरोषधीवीरुत्प्रवेशकर्तृत्वेनाभिहितेऽन्तर्यामिणि यो रुद्र इति तस्मै रुद्रायेति तद्वाक्याद्यन्तयो रुद्रशब्दप्रयोगेण यो रुद्र इति वाक्यप्रतिपाद्यान्तर्यामिणि शिवत्वस्य सिद्धतया शिवस्यान्तर्यामित्वाभिधायकवाक्यशेषरूपैतद्वाक्यानुसारेण सोऽन्तरादिति वाक्यस्य शिवेऽन्तर्यामित्वाभिधानपरत्वमनिवार्यम् ।

ननु "यो वै रुद्रस्स भगवान् यश्च ब्रह्मे"त्यादिषु बहुषु पर्यायेषु यो रुद्रो रुद्रशब्दार्थत्वेनास्यामुपनिषदि प्रसिद्धस्स भगवान् नारायणे रूढभगवच्छब्दार्थभूतनारायण एवेति बहुधाभिधानेनात्र जगदीश्वरे प्रयुक्तसकलरुद्रशब्दानां नारायणपरत्वावश्यम्भावेन "ततो देवा रुद्रं नापश्य" न्निति एतदनन्तरसन्दर्भस्य सर्वस्यापि नारायणपरत्वमेव सिद्ध्यतीत्येतत्सन्दर्भरूपवाक्यशेषानुसारेण सोऽन्तरादिति वाक्यस्य कथं शिवपरत्वं सिद्ध्येत् । प्रत्युत "ततो देवा रुद्रं नापश्य" न्नित्यनन्तरसन्दर्भस्य सर्वस्यापि नारायणपरत्वेन नारायणपरैतद्वाक्यशेषानुसारेण सोन्तरादिति वाक्यस्य शिवान्तर्यामिरूपनारायणपरत्वमेवोचितमिति चेदुच्यते । न हि "यो वै रुद्रस्स भगवान् यश्च ब्रह्मे"त्यादौ भगवच्छब्दस्य नारायणे रूढिमङ्गीकृत्य तेन रुद्रशब्दस्य रूढिपरित्यागस्सम्भवति । प्रथमश्रुतत्वेनासञ्जातविरोधिनो रुद्रशब्दस्य रुद्रशब्दानन्तरश्रुतत्वेन सञ्जातविरोधिभगवच्छब्दानुगुण्येन रूढिपरित्यागे उपक्रमाधिकरणविरोधापत्तेः । प्रत्युतासञ्जातविरोधिरुद्रशब्दानुसारेण सञ्जातविरोधिनो भगवच्छब्दस्य रूढिं परित्यज्य तस्य यौगिक्या वृत्त्या शिवपरत्वाभिधानमेवोचितम् ।

एवं बहूनामनुग्रहन्यायेन च रुद्रशब्दरूढ्यनुसारेण भगवच्छब्दरूढिं परित्यज्य यौगिक्या वृत्त्या, तस्य शिवपरत्वाश्रयणमावश्यकमेव । तत्र "यो वै रुद्रस्स भगवान् यश्च ब्रह्मे" त्यादिषु "यो वै रुद्रस्स भगवान् यश्च सत्य" मित्यन्तेषु पर्यायेषु रुद्रशब्दभगवच्छब्दयोरावृत्तेस्समानत्वेऽपि "ते देवा रुद्रं ध्यायन्ती"त्यत्र "रुद्रो रुद्र एकत्वमाहु रुद्रं शाश्वतं वै पुराण" मित्यत्र यो रुद्रोऽग्नावित्यत्र तस्मै रुद्रायेत्यत्र च रुद्रशब्दाभ्यासस्य भगवच्छब्दाभ्यासापेक्षयाधिकत्वेन एतद्रुद्रनाम्नोऽत्राम्नातानामीशानमहेश्वरमहादेवनाम्नाञ्चानुसारेण रुद्रशब्दापेक्षयात्र स्वरूपसंख्याकृतयैवाभ्यस्तैकभगवच्छब्दस्यैव रूढिं परित्यज्य यौगिक्या वृत्त्या शिवपरताया युक्तत्वात् । "विप्रतिषिद्धधर्माणां समवाये भूयसा स्यात्सधर्मत्व"मिति न्यायात् । अन्यथा विप्रतिषिद्धधर्माणामित्यधिकरणविरोधस्य परिहाराभावात् ।

किञ्चात्र देवकर्तृकस्तुतिसन्दर्भस्यादौ "ततो देवा ऊर्ध्वबाहवः स्तुन्वन्ती"ति वाक्ये स्तुन्वन्तीति देवकर्तृकस्तुतेः कर्माकाङ्क्षानुरोधेन ततो देवा इत्येतदव्यवहितप्राक्तने "ते देवा रुद्रं ध्यायन्ती"ति वाक्ये ध्यानकर्मीभूतरुद्रस्यैवात्र देवकर्तृकस्तुतिकर्मत्वावश्यम्भावेन "तदेतद्रुद्रचरित"मिति देवकर्तृकस्तुत्यनन्तरवाक्ये देवकर्तृकस्तुतिसन्दर्भमात्रप्रतिपाद्यार्थस्य सर्वस्यापि कण्ठरवेणैव रुद्रचरितत्वाभिधानेन च एतत्स्तुतिसन्दर्भस्य सर्वस्यापि रुद्रपरत्वावश्यम्भावेन एतत्स्तुतिविषयीभूतरुद्रवाचकस्य "ते देवा रुद्रं ध्यायन्ती"ति वाक्यस्थरुद्रपदस्य "ततो देवा रुद्रं नापश्यन्"निति वाक्ये शिवपरत्वेनोभयवादिसंमतरुद्रपदसमभिव्याहारेणोभयत्र रुद्रपदप्रयोगात् स एवायं रुद्र इति प्रत्यभिज्ञानेन रुद्राभिधानश्रुत्या च शिवपरत्वावश्यम्भावेन "यो वै रुद्रस्स भगवानि"त्यादिसन्दर्भगतानां रुद्रशब्दभगवच्छब्दादीनां शिवपरत्वमावश्यकमेव । अत्र रुद्रशब्दभगवच्छब्दयोर्बलसाम्याङ्गीकारेऽपि शिवपरत्वेनोभयवादिसंमतरुद्रशब्दसमभिव्याहारादिसहायेन प्रबलरुद्रशब्दानुसारेण तादृशसहायाभावेन दुर्बलभगवच्छब्दस्य यौगिक्या वृत्त्या शिवपरत्वं सिद्धमेव ।

अपि चात्र रुद्रशब्दभगवच्छब्दयोर्बहुधाभ्यस्तयोर्बलसाम्यमङ्गीकृत्य भगवच्छब्देन रुद्रशब्दस्यापि विष्णुपरत्वं रुद्रशब्देन भगवच्छब्दस्यापि शिवपरत्वं वेति संशयाङ्गीकारे "स एको रुद्रस्स ईशानस्स भगवान्स महेश्वरस्स महादेव" इति चतुर्थखण्डान्तिमसन्दर्भे, तथा "अथ कस्मादुच्यत एको रुद्र" इत्यादिके, "तस्मादुच्यते महादेव" इत्यन्ते पञ्चमखण्डसन्दर्भे च भगवच्छब्दस्य शिवे रुद्ररुद्रादिशब्दमध्यपठितत्वरूपेण समभिव्याहारेण सन्दंशेन च शिवपरत्वं दृष्टमेवेति तत्सन्दर्भद्वयरूपवाक्यशेषेण रुद्रशब्दानुसारेण भगवच्छब्दस्य शिवपरत्वमेवोचितम् ।

किञ्चात्र रुद्रशब्दभगवच्छब्दयोरुक्तसंशयाङ्गीकारेऽपि शिवनारायणयोर्नित्यसिद्धसर्वज्ञत्वादिनिखिलसर्वैश्वर्यरूपेणाभेदाङ्गीकरणेन तेषां रुद्रशब्दभगवच्छब्दादीनां रूढिपरित्यागं विनैव नारायणाभिन्नशिवपरत्वमेव युक्तम् । सर्वेषामेषां रूढिरक्षणपक्षे सम्भवति तदपहाय केषाञ्चिद्रूढिपरित्यागपक्षाश्रयणस्यातिगर्हितत्वात् । न हि जीवत्वशङ्काकलङ्कहीनशिवस्य

निरुक्तो भगवानेव। शिव एव यो ब्रह्मा प्रसिद्धश्चतुर्मुखस्स चेति तस्मै ब्रह्मरूपं प्राप्ताय भगवते रुद्राय नमो नम इति वाक्यार्थस्यावश्यं वक्तव्यत्वात्। भगवच्छब्दस्य विष्णौ रूढिसिद्धये त्वदुक्तन्यायेनैवात्र भगवच्छब्दस्यात्र शिवानुवादकत्वेन बहुशश्शिवे प्रयोगबाहुल्यादेव तस्य शिवे रूढिसिद्धिसम्भवात्। प्रत्युतानेकश्रुतिवचनसद्भावेन पुराणादिवचनकोटेरपि बाधौचित्याच्च।

यच्चोक्तं "यो वै रुद्र" इत्यादिकं परपक्षे सर्वथासङ्गतमेव। तस्य हि यो रुद्रस्स भगवानेव यो ब्रह्मा सोऽपि भगवानेव अत उभयात्मकाय भगवते नम इति ह्यर्थस्स्वरसः। भगवच्छब्दस्य रुद्रपरत्वे यो रुद्रो यश्चान्यस्ताभ्यां नम इति वक्तव्यम्। तस्मा इत्यनन्वितमेव। यो रुद्रो ब्रह्माभूदित्यङ्गीकारे द्वितीयचरणपदासामञ्जस्यम्। "यो रुद्रोऽभूत् यो ब्रह्माभूदि-त्यर्थाङ्गीकारे पर्य्येभारं स्वरसतो लभ्यते। पक्षद्वये भगवानिति शब्दस्य स्वारसिकयच्छब्दप्रतिनिर्देशकत्वभङ्गः।

सिद्धान्ते यश्च ब्रह्मा सोऽपि भगवानेवेति तद्भगवच्छब्दावृत्तिस्तु न दोषः। चकारेण द्योतनात्। यो वै यश्चेति वाक्यद्वयेनोभयतादात्म्यमुक्त्वा तस्मै नम इति तृतीयवाक्येन तादृशस्य भगवत एव नमस्कारः क्रियत इति पूर्वोक्तार्थ एव च स्वरसः। एवमुक्तार्थस्येह विवक्षितत्वादेव।

नन्वस्त्वेवं योजना अथापि यो रुद्रस्स भगवानित्यत्र भगवच्छब्दे यौगिकत्वमेवेष्यत इति चेन्न। बाधकं विना स्वारसिकरूढिपरित्यागायोगात्। किञ्च यो रुद्रस्स सर्वज्ञत्वादिगुणको यश्च ब्रह्मा सोऽपि सार्वज्ञ्यादिगुणक इत्युक्तावन्यत्रापि तथात्वे अयोग्यार्थता रुद्रस्तुतिविरोधश्च। तस्माद्रूढ्या भगवत्परतयैव प्रयुक्तमित्यनद्वाक्यसङ्गत्यर्थमपि अथर्वशिरसो भगवत्परत्वं वक्तुं युक्तमिति।

तन्न। उक्तरीत्यात्र वाक्यद्वयेनोपपत्तौ वाक्यत्रयाङ्गीकारस्यासद्भूतत्वात्। यश्च भगवानित्यस्याश्रुति विनैवोपपत्तौ तदावृत्तिकल्पनस्यान्याय्यत्वाच्च। ब्रह्मेत्यादौ यच्छब्दचशब्दयोरनच्छब्दानुषङ्गद्योतनेनैव चरितार्थत्वात्।

नित्यसिद्धेश्वरत्वेन निश्चितनारायणस्य च नित्यसिद्धसर्वज्ञत्वादिविशिष्टरूपेण कथमभेदसिद्ध्यापि शिवे तादृशाभेदानर्हत्वस्य व्यक्तत्वादिति शङ्कितुं अक्षमम् । शिवे ईश्वरत्वाभिधायकवचनानां स्वार्थतात्पर्यवत्त्वस्य तेन तेषां वचनानां प्राबल्यस्य तथा शिवे जीवत्वप्रत्यायकवचनानां स्वार्थतात्पर्यराहित्यस्य तेन तेषां वचनानां शिवे जीवत्वबोधनसामर्थ्याभावस्य चाग्रे वक्ष्यमाणत्वेन शिवस्यैदम्पर्येण ईश्वरत्वाभिधायकेष्वथर्वशिरःश्रुत्यादिवचनेषु जागरूकेषु तस्मिञ्जीवत्वशङ्कागन्धस्याप्यवकाशाभावात् । शिवस्येश्वरत्वाभिधायकश्रुतिवचनेभ्यो दुर्बलैरुदाहरिष्यमाणवचनैस्तस्मिन्प्रतीयमानजीवत्वस्य दोषत्वाङ्गीकारे नारायणस्यापीश्वरत्वाभिधायकश्रुतिवचनेभ्यो दुर्बलैरुदाहरिष्यमाणरामायणादिवचनैस्तस्मिन्नारायणे प्रतीयमानजीवत्वस्यापि दोषत्वाङ्गीकारापत्तेस्समानत्वाच्च ।

ननु महोपनिषदादिषु नारायणस्येश्वरत्वं सिद्धमेवेति शिवस्य नारायणाभिन्नत्वसिद्धावीश्वरत्वसिद्धिः, [इति चेन्न ; शिवस्य नारायणाभिन्नत्वसिद्धावीश्वरत्वसिद्धिः] ईश्वरत्वसिद्धौ नारायणाभिन्नत्वसिद्धिरित्यन्योन्याश्रयस्य समानत्वेन तस्याप्यनीश्वरत्वप्रसङ्गात् । वस्तुतस्तु शिवनारायणयोरुभयोरपि श्रुतिपुराणादिभिस्सर्वेश्वरत्वसिद्ध्यनन्तरं हीश्वरनानात्वशङ्कोत्थितिः तच्छङ्का सर्वनियामकान्तर्यामिरूपेण तयोरभेदाङ्गीकारे निरस्तैव । तथा तयोर्जीवत्वशङ्कापि तज्जीवत्वस्याभिनयरूपत्वाङ्गीकारे निरस्तैवेति । अत्र शिवस्येश्वरत्वासिद्धौ बहुधाभ्यस्तेन त्वत्कल्पितरूढिमता भगवच्छब्देन शिवस्य नारायणाभेदसिद्धिर्निष्प्रत्यूहैव । किञ्च नारायणे भगवच्छब्दस्य रूढिकल्पने कोशवचनरूपं न किञ्चिन्मानमस्ति । पुराणादिवचनैस्तत्कल्पने अस्तु "यो वै रुद्रस्स भगवान्" इति सकलपर्यायेषु शिवस्य भगवच्छब्देनानुवादबलात् भगवच्छब्दस्य शिवे रूढिरिसद्ध्यत्येवेति भगवच्छब्दस्य नानार्थकत्वसिद्ध्या तस्यात्र रुद्रशब्दसमभिव्याहृतत्वेन शिवप्रकरणगतत्वेन च भगवच्छब्दस्य शिवपरत्वावश्यम्भावेनात्र बहुधाभ्यस्तभगवच्छब्देनास्या उपनिषदो नारायणपरत्वमेव सिद्ध्यतीत्येतन्मनोरथमात्रम् । यो वै रुद्र इत्यादौ यो वै सकलशास्त्रेषु प्रसिद्धस्सर्वेश्वरत्वसकलजगदुदयस्थितिलयहेतुत्वादिनाऽस्यामुपनिषदि निरुक्तश्च रुद्रः शिवस्स परोक्षं गतो भगवान् अस्यामुपनिषदि सर्वज्ञत्वेन

निरुक्तो भगवानेव । शिव एव यो ब्रह्मा प्रसिद्धश्चतुर्मुखस्स चेति तस्मै ब्रह्मरूपं प्राप्ताय भगवते रुद्राय नमो नम इति वाक्यार्थस्यावश्यं वक्तव्यत्वात् । भगवच्छब्दस्य विष्णौ रूढिसिद्धये त्वदुक्तन्यायेनैवात्र भगवच्छब्दस्यात्र शिवानुवादकत्वेन बहुशश्शिवे प्रयोगबाहुल्यादेव तस्य शिवे रूढिसिद्धिसम्भवात् । प्रत्युतानेकश्रुतिवचनसहस्रेण पुराणादिवचन-कोटेरपि बाधौचित्याच्च ।

यच्चोक्तं "यो वै रुद्र" इत्यादिकं परपक्षे सर्वथासङ्गतमेव । तस्य हि यो रुद्रस्स भगवानेव यो ब्रह्मा सोऽपि भगवानेव अत उभयात्मकाय भगवते नम इति ह्यर्थस्स्वरसः । भगवच्छब्दस्य रुद्रपरत्वे यो रुद्रो यश्चान्यस्ताभ्यां नम इति वक्तव्यम् । तस्मा इत्यनन्वितमेव । यो रुद्रो ब्रह्माभूदित्यङ्गीकारे द्वितीययत्पदासामञ्जस्यम् । यो रुद्रोऽभूत् यो ब्रह्माभूदित्यर्थाङ्गीकारे पर्यायान्तरं स्वरसतो लभ्यते । पक्षद्वये भवानिति शब्दस्य स्वारसिकयच्छब्दप्रतिनिर्देशकत्वभङ्गः ।

सिद्धान्ते यश्च ब्रह्मा सोऽपि भगवानेवेति तद्भगवच्छब्दावृत्तिस्तु न दोषः । चकारेण द्योतनात् । यो वै यश्चेति वाक्यद्वयेनोभयतादात्म्यमुक्त्वा तस्मै नम इति तृतीयवाक्येन तादृशस्य भगवत एव नमस्कारः क्रियत इति पूर्वोक्तार्थ एव च स्वरसः । एवमुक्तार्थस्येह विवक्षितत्वाच्च ।

नन्वस्त्वेवं योजना अथापि यो रुद्रस्स भगवानित्यत्र भगवच्छब्दे यौगिकत्वमेवेष्यत इति चेन्न । बाधकं विना स्वारसिकरूढिपरित्यागा-योगात् । किञ्च यो रुद्रस्स सर्वज्ञत्वादिगुणकः यश्च ब्रह्मा सोऽपि सार्वज्ञ्यादिगुणक इत्युक्तावन्यथापि तथात्वे अयोग्यार्थता रुद्रस्तुतिविरोधश्च । तस्माद्रूढ्या भगवत्परतयैव प्रयुक्तमित्यनुवाक्यसङ्गत्यर्थमपि अथर्वशिरसो भगवत्परत्वं वक्तुं युक्तमिति ।

तन्न । उक्तरीत्यात्र वाक्यद्वयेनोपपत्तौ वाक्यत्रयाङ्गीकारस्यासङ्गतत्वात् । भगवानित्यस्यावृत्तिं विनैवोपपत्तौ तदावृत्तिकल्पनस्यान्याय्यत्वाच्च । यश्च ब्रह्मेत्यादौ यच्छब्दचशब्दयोस्तच्छब्दानुषङ्गयोगेनैव चरितार्थत्वात् ।

किञ्चात्र "यो वै रुद्रस्स भगवा" निति नारायणे बहुधा रुद्रतादात्म्याभिधानस्य वैयर्थ्यापत्तेः। स्तुतावनुपयोगात्। त्वन्मतरीत्या विष्णौ ब्रह्मादिसकलजगत्तादात्म्यस्य रुद्रतादात्म्यस्य च समानत्वात्। त्वन्मते—

"रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः।
ब्रह्मा मामाश्रितो राजन् नाहं कश्चिदुपाश्रितः॥
ममाश्रयो न कश्चित्तु सर्वेषामाश्रयो ह्यहम्।"

इत्यादिभारतवचनाद्युदाहरणेन रुद्रे तामसत्वाङ्गीकारेण तस्य ब्रह्मपुत्रत्वाङ्गीकारेण च रुद्रापेक्षया ब्रह्मण एवाधिक्याङ्गीकारात्। रुद्रस्य सर्वेश्वरत्वपक्षे रुद्रस्तुतेरेवाप्रकृतत्वेन तस्य तत्सिद्धये बहुधा भगवच्छब्देन तदनुवादस्यायुक्तत्वात्।

अपि च यो रुद्रस्स भगवानेव यो ब्रह्मा सोऽपि भगवानेवेत्यत्र नारायणस्य रुद्रब्रह्मोभयात्मकत्वं विवक्षितमुत तत्रोभयान्तर्यामित्वमथ वा यौगिक्या वृत्त्या रुद्रशब्दब्रह्मशब्दयोर्नारायणपरत्वम्। किं वा यौगिक्या वृत्त्या रुद्रशब्दस्य नारायणपरत्वम्। ब्रह्मशब्दस्य ब्रह्मात्मत्वब्रह्मान्तर्यामित्वान्यतरपरत्वम्।

नाद्यः—एतत्सन्दर्भस्य सर्वस्यापि रुद्रस्तुतिपरतायाः प्रदर्शितत्वेन रुद्रे नारायणविभूतित्वाभिधानमेव रुद्रस्तुतिरिनीति वक्तव्यत्वेन रुद्रस्येव ब्रह्मणोऽपि प्रकृतानुपयोगिनी स्तुतिः प्रासेवेति यश्च ब्रह्मेति वाक्यस्यानुपयुक्तार्थपरत्वापत्तेः। रुद्रब्रह्मणोर्नारायणविभूतित्वाभिधानरूपस्तुतेरसमानस्थान् यत्तुनोऽत्र रुद्रस्य नारायणविभूतित्वकल्पने तस्य निकृष्टत्वासिद्ध्या रुद्रस्तुतिगन्धस्याप्यसिद्ध्या नारायणस्तुतेरेव सिद्ध्या च श्रुतहानाश्रुतकल्पनापत्तेश्च। अत एव न द्वितीयः—अत्र नारायणस्य रुद्रब्रह्मान्तर्यामित्वकल्पने रुद्रस्तुत्यभावस्य नारायणस्तुतिसिद्धेश्च व्यक्तत्वेन श्रुतहानाश्रुतकल्पनापत्तेर्विस्पष्टत्वात्। रुद्रशब्दब्रह्मशब्दयोरुभयोरपि रूढिं परित्यज्योभयत्र लक्षणाङ्गीकारापेक्षया भगवच्छब्दस्यैकस्य

रूढिं परित्यज्य यौगिकत्वाश्रयणस्यैव युक्तत्वात्। रुद्रशब्दस्य रूढिपरित्यागापेक्षया भगवच्छब्दरूढिपरित्यागस्यौचित्त्वे रुद्रशब्दस्यासञ्जातविरोधित्वं, बहूनामनुग्रहन्यायः, शिवपरत्वेन संमतरुद्रपदसमभिव्याहारः, सन्दिग्धरुद्रे संमतरुद्रत्वप्रत्यभिज्ञा, रुद्रश्रुतिः, वाक्यशेषश्चेति हेतूनां षण्णां, दर्शितत्वात्। रुद्रे नारायणाभेदाङ्गीकारेण भगवच्छब्दस्य रूढ्यङ्गीकारेण च भगवच्छब्दस्य रुद्रपरत्वेऽपि तस्य रूढिपरित्यागाभावस्यानुपदमेव दर्शितत्वेन भगवच्छब्दरूढिपरित्यागदोषस्यैवाप्रसक्तेश्च। अत एव न तृतीयः—रुद्रशब्दरूढिपरित्यागेऽभिहितदोषाणां भगवच्छब्दरूढिपरित्यागे उपपत्तीनां तद्रूढिपरित्यागाभावस्य ब्रह्मशब्दरूढिपरित्यागदोषस्य चास्मिन् तृतीयपक्षेऽपि समानत्वात्। नारायणस्य यौगिकया वृत्त्या रुद्रशब्दब्रह्मशब्दार्थत्वाङ्गीकारे रुद्रशब्दार्थरूपनारायणस्य स्तुत्यलाभाच्च। अत एव न तुरीयः—रुद्रशब्दस्य रूढिपरित्यागेऽभिहितदोषाणां भगवच्छब्दस्य रूढिपरित्यागे उपपत्तीनां रूढिपरित्यागाभावस्य च तुरीयपक्षेऽपि समानत्वात्। अस्मिन्पक्षेऽपि ब्रह्मशब्दस्य तदन्तर्यामिपरत्वाङ्गीकारो युक्त एव। ब्रह्मशब्दे रूढिपरित्यागदोषस्य लक्षणाङ्गीकारदोषस्य चात्रापि समानत्वात्। अस्मिंस्तुरीयपक्षे रुद्रशब्दस्य यौगिकया वृत्त्या नारायणपरत्वं ब्रह्मशब्दस्य तु नारायणे ब्रह्मात्मकत्वपरत्वं ब्रह्मान्तर्यामिपरत्वं वेति रुद्रशब्दवैलक्षण्येनाभिहिते पक्षद्वयेऽपि वाक्यवैरूप्यदोषस्य विस्पष्टत्वाच्च। एवं यो वै रुद्र इत्यादिरत्यन्तासङ्गतं वाक्यार्थमुक्त्वा अनेनास्याथर्वशिरसस्सर्वस्यापि नारायणपरत्वमेव सिद्ध्यति न शिवपरत्वमिति वक्तायं दक्षिणदिशं गच्छन् उदग्दिशं गच्छामीति वक्तेव। अतो यो वै रुद्र इत्यादेस्सिद्धान्तेऽभिहितवाक्यार्थ एव स्वरसः। न हि सिद्धान्ते भगवच्छब्दस्य शिवे रूढिकल्पनं गौरवग्रस्तमिति शङ्कितुं शक्यम्। नारायणेऽपि भगवच्छब्दरूढिकल्पने गौरवस्य समानत्वात्। प्रामाणिकं गौरवं न दोषायेति चेत्तदत्रापि समानम्। अतोऽत्र शिवस्य भगवच्छब्देनानुवादबलात् सिद्धमत्येव भगवच्छब्दस्य शिवे रूढिः।

यद्वा तु नारायणे शिवे वा भगवच्छब्दस्य रूढिर्न सम्भवत्येव गौरवान्मानाभावाच्च। भगवच्छब्दस्य नारायणे शिवे वा रूढिनिर्णायकत्वे-

नाभिमतानां श्रुतिपुराणादिवचनानां भगवच्छब्दगतयौगिकत्वपादाय चरितार्थत्वात्। तेषां वचनानां भगवच्छब्दगतरूढिरूपस्वार्थे तात्पर्याभावात् तेषां वचनानां तस्मिन्नर्थे तात्पर्यग्राहकाणामुपक्रमोपसंहारयोरेकरूप्यादिलिङ्गानामभावात्। तत्र लिङ्गानामभावे तेषां वचनानां स्वावकलस्य सिद्धत्वात् शिवे जीवत्वप्रत्यायकदुर्बलवचनैस्तस्मिन् सर्वज्ञत्वाद्यभिधायकप्रबलभगवच्छब्दस्य बाधप्रसक्त्यसम्भवात्। शिवे जीवत्वप्रत्यायकवचनानां स्वार्थेतात्पर्याभावेन दौर्बल्यस्य च दर्शयिष्यमाणत्वात्। अत एतदुपनिषदि षट्त्रिंशद्वारमाम्नातभगवच्छब्दस्य "आनन्दमयोऽभ्यासात्" इति न्यायात् स्वार्थतात्पर्यसिद्ध्या प्रबलतायास्सिद्धत्वात्। अतस्सिद्धमेव शिवस्य भगवच्छब्दार्थत्वं "यो वै रुद्रस्स भगवान्" नित्यादिस्तुतिसन्दर्भप्रतिपाद्यत्वाच्चेत्येवं शिवपरैतत्सन्दर्भरूपवाक्यशेषबलादपि सोऽन्तरादिति वाक्यस्य शिवपरत्वं सिद्ध्यति।

यच्चोक्तमथर्वशिरसस्सर्वव्यापि रुद्रान्तर्यामिपरत्वेन तदुपासनाङ्गस्य "ओमादौ मध्ये भूर्भुवस्सरन्ते शीर्षे जनदो विश्वरूपोऽसी" त्युपक्रान्तस्य मन्त्रस्यैकादशभूतप्रणवस्तत्यर्थतया "यदुत्तरतस्स ओङ्कारो य ओङ्कारस्स प्रणवो यः प्रणवस्स सर्वव्यापी सोऽनन्तो योऽनन्तस्तत्तारं यत्तारं तत्सूक्ष्मं यत्सूक्ष्मं तच्छुक्लं यच्छुक्लं तद्वैद्युतं यद्वैद्युतं तत्परं ब्रह्मेती" ति ओङ्कारादिनवशब्दान् यच्छब्दतच्छब्दघटितनयाभिधाय "स एकः स एको रुद्रः स ईशानः स भगवान् स महेश्वरस्स महादेव" इत्यत्र एक इत्यादिमहादेव इत्यन्तषण्णां शब्दानां तच्छब्दमात्रघटितत्वरूपवैलक्षण्याभिधानेन एक इत्यादिषण्णां शब्दानां परमात्मपरत्वमेव युक्तम्। अन्यथा एतद्वैलक्षण्यस्य वैयर्थ्यापत्तेः। एक इत्यादिषण्णां तस्याक्तननवभिस्साम्याय तन्नवस्विव एक इत्यादिष्वष्टस्वपि यच्छब्दषट्काध्याहारापत्तेश्च।

किञ्च शब्दात्मकप्रणवपरशब्दानां समाप्तिबोधकस्य तत्परं ब्रह्मेतीति ब्रह्मशब्दसमनन्तरपठितेतिशब्दस्य सार्थकत्वाय तत्समनन्तराम्नातैक इत्यादिषण्णां परमात्मपरत्वमेव न्याय्यम्। अन्यथा तत्रत्येतिशब्दस्य वैयर्थ्यापत्तेः। तथा चैक इत्यादिषट्शब्देषु शिवे रूढानां रुद्रेशानमहेश्वरमहादेवशब्दानां चतुर्णां शिवपरत्वावश्यम्भावेन एतैस्समभिव्याहृतत्वेन सन्दष्टत्वेन च भगवच्छब्दस्य च शिवपरत्वं सिद्धमेव। न हि

"वाच्योऽयं भगवान्विष्णुर्वाचकः प्रणवः स्मृतः" ॥ इति वचनानुगुण्येनात्रस्थरुद्रेशानमहेश्वरमहादेवशब्दानां नारायणपरत्वमेव न शिवपरत्वमिति वक्तुं शक्यम् । तथात्वे रुद्रेशानमहेश्वरमहादेवशब्दानां रूढिपरित्यागस्यावश्यकत्वेन तेषां श्रुतित्वभङ्गापत्तेः । पुराणादिवचनानुगुण्येन बहुश्रुतीनां श्रुतित्वभङ्गाङ्गीकारे विरोधाधिकरणस्य दत्तजलाञ्जलित्वापत्तेः । प्रत्युत श्रुतिविरुद्धानां पुराणादिवचनानां विरोधाधिकरणन्यायेनाप्रामाण्यस्यैव युक्ततमत्वात् । शिवनारायणयोरभेदाश्रयणरूपे वैदिकाग्रगण्यानां भगवत्पादानां पक्षे तु नायं विरोधो न चास्य वचनस्याप्रामाण्यञ्च । अतस्तत्र एक इत्यादिशब्दषट्कस्य शिवपरत्वमत्यूहमेवेति शिवपरैतच्छब्दषट्करूपवाक्यशेषबलादपि सोऽन्तरादिति वाक्यस्य शिवपरत्वमेव सिद्ध्यति ।

यदप्युक्तम् "सं बाहुभ्यां नमति संपतत्रैर्द्यावाभूमी जनयन् देव एकः । तदेतदुपासितव्यं वाचवदन्ति । तदन्तु ब्रह्मणमयं पन्था विततमुत्तरेण न देवा येन ऋषयो येन पितरः प्राप्नुवन्ति परमं परं परायणमे"त्यादावाम्नातिं जगत्कारणत्वं मुमुक्षूपास्यत्वञ्च शिवान्तर्यामिनिष्ठमेव । अस्या उपनिषदस्सर्वस्या अपि शिवान्तर्यामिपरत्वादिति तदत्यन्तभ्रान्तिविजृम्भितमेव । अस्या उपनिषदस्सर्वस्या अपि शिवपरत्वस्य प्रदर्शितत्वात् ।

किञ्च—

"तदेतदुक्तमाविष्कृतम्—

एषो हि देवः प्रदिशो नु सर्वाः पूर्वो हि जातस्स उ गर्भे अन्तः ॥
स एव जातस्स जनिष्यमाणः प्रत्यङ्मुखास्तिष्ठति विश्वतोमुखः ॥-

विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।
संबाहुभ्यां नमति संपतत्रैर्द्यावाभूमी जनयन् देव एकः ॥

तदेतदुपासितव्यं वाचवदन्ति
तदन्तु ब्रह्मणमयं पन्था विततं उत्तरेण" ॥

तत्पदेन परामर्श उपपद्यत इति चेत् । श्रुत्यन्तरप्रामाण्यान्तर्याम्यनुप्रवेशानुवादे यथाप्राप्त्यनुवादावश्यकतया नारायणस्यैव प्रतिपादनमिति सिद्धान्तानतिरेकः । अत्रैवानुप्रवेशविधाने तु आत्मत्वस्यातिप्रसक्ततया जीवान्तरस्याप्यन्तर्यामित्वप्रसङ्गेन स्वसमीहितासिद्धिः, पूर्ववाक्यासाङ्गत्यम् श्रुत्यन्तरविरोधश्च । अतः स्वसमीहितसिद्धये स्वात्मत्वविवक्षायामहं प्राविशमिति प्रयोगापत्तिर्दुर्वारा । "तमेव शरणं गच्छ" इत्यत्र पूर्वमस्मच्छब्दनिर्दिष्टे स्वात्मनि वासुदेवेन "ईश्वरस्सर्वभूताना"मित्यव्यवहितपूर्वश्लोके स्वावतारमूलभूतपरावस्थामात्रविशिष्टस्वात्मवाचकेश्वरशब्देन परोक्षनिर्देशस्य कृतत्वात् तन्निर्देशापेक्षया तमेवेति तत्पदनिर्देशो युक्तः । अत्र त्वहंपदनिर्दिष्टस्यैव स्वात्मनस्तत्पदेन निर्देशः कर्तव्यस्स चानुपपन्न इति तत्र परामिमतत्वकथनं पूर्वोत्तरवाक्यपर्यालोचनावैधुर्यकृतमिति ।

तदसत् । अस्याथर्वशिरसस्सर्वस्य, तथा तन्मध्यगतत्वादिहेतुभिः सोऽन्तरादिति वाक्यस्य च शिवपरत्वावश्यकताया दर्शितत्वात् । "सोऽन्तरादन्तरं प्राविश"दिति शिवः स्वस्मिन् परोक्षत्वविवक्षया तच्छब्दप्रयोगं कृतवानित्यस्य न्याय्यत्वात् ।

"अयं स ते तिष्ठति सङ्गमोत्सुको विशङ्कसे भीरु यतोऽवधीरणाम् ।
लभेत वा प्रार्थयिता न वा श्रिये श्रिया दुरापः कथमीप्सितो भवेत्" ॥

इति कालिदासप्रणीते दुष्यन्तेन स्वस्मिन्परोक्षत्वविवक्षया कृततच्छब्दप्रयोगस्य विस्पष्टत्वात् । अन्यैर्महाकविभिः प्रणीतेष्वस्यार्थस्य व्यक्तत्वात् ।

"वातो वातुमसौ बिभेति तपनस्तप्तुं यदीये जने
दग्धुं वा दहनस्स शक्ति भुवनान्यद्यापि लङ्केश्वरः ।
सार्कं ताटकया सुबाहुमखिलानप्यस्य हत्वा भटान्
रामो जीवितुमुत्सहेत किमयं गोप्तुश्च किं कौशिकः" ॥

इत्यभियुक्तवचने रावणेन स्वस्मिन्परोक्षत्वविवक्षया कृततच्छब्दप्रयोगस्य विस्पष्टत्वात् ॥

इत्यादिसन्दर्भे शिवनिष्ठत्वेन सर्वात्मत्वस्य जगत्कारणत्वस्य मुमुक्षूपास्यत्वस्य चाभिधानात् । एष हि देव-इत्यत्रत्यैतच्छब्दार्थगतत्वेनैव सर्वात्मत्वजगत्कारणत्वमुमुक्षूपास्यत्वादीनामभिधानस्य व्यक्तत्वात् । एष हि देव इत्यत्रैतच्छब्देन एष हीत्येतदव्यवहितप्राक्तने तदेतद्रुद्रचरितमिति वाक्ये श्रुतरुद्रपदोपस्थितशिवस्यैव ग्रहणावश्यम्भावात् । सर्वनामशब्दानां पूर्वोपस्थितपरामर्शित्वनियमात् अव्यवहितपूर्वोपस्थितार्थं विहाय श्रुत्यन्तराद्युपस्थितार्थस्वीकारस्यान्याय्यत्वाच्च ।

अपि चात्रोपास्यत्वाभिधायकसन्दर्भस्थे—

"यो योनिं योनिमधितिष्ठत्येको येनेदं पञ्चविधञ्च सर्वम् ।
तमीशानं पुरुषं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति" ॥

इत्यन्तिमवाक्ये शिवस्य सार्वात्म्यं मुमुक्षूपास्यत्वञ्च कण्ठरवेणाभिहितम् । "पुरुषं देवमीड्यं तारमीशानं निदिध्यायन्नत्यन्तशान्तिं मुक्तिमेती" तीशानध्याने मुक्तिहेतुत्वाम्नानस्य व्यक्तत्वात् । यो योनिं योनिमित्यादिना यस्य सार्वात्म्यमुक्तं तस्यैव तमीशानमिति तच्छब्दपूर्वकेशानशब्देनानुवादेनोक्तसार्वात्म्यमीशानशब्दितशिवनिष्ठमेवेत्यस्य व्यक्तत्वात् ईशानशब्दस्य शिवे रूढत्वात् । रूढ्यर्थे सम्भवति तमपहाय यौगिकार्थग्रहणस्यायुक्तत्वात् । अतोऽत्र शिवस्य सर्वात्मत्वं जगत्कारणत्वं मुमुक्षूपास्यत्वञ्चोक्तमिति सिद्धमेव । तथा च शिवस्य सर्वात्मत्वजगत्कारणत्वमुमुक्षूपास्यत्वाभिधायकैतत्सन्दर्भरूपवाक्यशेषबलाच्च "सोऽन्तरादन्तरं प्राविश" दित्यस्य शिवेऽन्तर्यामित्वाभिधानपरत्वं सिद्धमेव । सर्वात्मनस्सर्वकारणस्य मुमुक्षूपास्यस्यैव सर्वान्तर्यामित्वं नान्यस्येत्यस्य सुप्रसिद्धत्वात् ।

यच्चोक्तं सोऽन्तरादिति वाक्यस्य शिवेऽन्तर्यामित्वाभिधानपरत्वे तद्वाक्यस्य शिववाक्यत्वेन तस्य स्वस्थानान्वयेऽहं प्राविशमिति प्रयोगापत्तिः । न चायं दोषस्त्वत्पक्षेऽपि समानः; अनुपचरिताहंपदप्रयोगविषयतया रुद्रेण स्वात्मन इव स्वान्तर्यामिणोऽपि तत्पदेन परामर्शायोगादिति वाच्यम् । स्वान्तर्यामित्वविवक्षां विनापि परमात्मत्वेन श्रुत्यन्तरप्रसिद्धनारायणस्य तत्पदेन परामर्शोपपत्तेः । रुद्रस्यापि स्वात्मत्वविवक्षां विना आत्मत्वसामान्याकारेण

तत्पदेन परामर्श उपपद्यत इति चेन्। श्रुत्यन्तरप्राप्तान्तर्याम्यनुप्रवेशानुवादे यथाप्राप्त्यनुवादावश्यकतया नारायणस्यैव प्रतिपादनमिति सिद्धान्तातिरेकः। अत्रैवानुप्रवेशविधाने तु आत्मत्वस्यातिप्रसक्ततया जीवान्तरस्याप्यन्तर्यामित्वप्रसङ्गेन स्वसमीहितासिद्धिः, पूर्ववाक्यासाङ्गत्यम्, श्रुत्यन्तरविरोधश्च। अतः स्वसमीहितसिद्धये स्वात्मत्वविवक्षायामहं प्राविशमिति प्रयोगापत्तिर्दुर्वारा। "तमेव शरणं गच्छ" इत्यत्र पूर्वमस्मच्छब्दनिर्दिष्टे स्वात्मनि वासुदेवेन "ईश्वरस्सर्वभूताना"मित्यव्यवहितपूर्वश्लोके स्वावतारमूलभूतपरावस्थामात्रविशिष्टस्वात्मवाचकेश्वरशब्देन परोक्षनिर्देशस्य कृतत्वात् तन्निर्देशापेक्षया तमेवेति तत्पदनिर्देशो युक्तः। अत्र त्वहंपदनिर्दिष्टस्यैव स्वात्मनस्तत्पदेन निर्देशः कर्तव्यस्स चानुपपन्न इति तत्र परामिमतत्वकथनं पूर्वोत्तरवाक्यपर्यालोचनावैधुर्यकृतमिति।

तदसत्। अस्याथर्वशिरस्सर्वस्य, तथा तन्मध्यगतत्वादिहेतुभिः सोऽन्तरादिति वाक्यस्य च शिवपरत्वावश्यकताया दर्शितत्वात्। "सोऽन्तरादन्तरं प्राविश"दिति शिवः स्वस्मिन् परोक्षत्वविवक्षया तच्छब्दप्रयोगं कृतवानित्यस्य न्याय्यत्वात्।

"अयं स ते तिष्ठति सङ्गमोत्सुको विशङ्कसे भीरु यतोऽवधीरणाम्।
लभेत वा प्रार्थयिता न वा श्रियं श्रिया दुरापः कथमीप्सितो भवेत्" ॥

इति कालिदासप्रणीते दुष्यन्तेन स्वस्मिन्परोक्षत्वविवक्षया कृततच्छब्दप्रयोगस्य विस्पष्टत्वात्। अन्यैर्महाकविभिः प्रणीतेष्वस्यार्थस्य व्यक्तत्वात्।

"बाणो वायुसुतो बिभेति तपनस्तप्तुं मदीये जने
दग्धुं वा दहनस्स शक्ति भुवनान्यद्यापि लङ्केश्वरः।
सार्धं ताटकया सुबाहुमखिलानप्यस्य हत्वा भटान्
रामो जीवितुमुत्सहेत क्रियन्तु गोप्तुश्च किं कौशिकः" ॥

इत्यभियुक्तवचने रावणेन स्वस्मिन्परोक्षत्वविवक्षया कृततच्छब्दप्रयोगस्य विस्पष्टत्वात्॥

नन्वस्तु स्वस्मिन् परोक्षत्वनिर्देशस्तच्छब्दप्रयोगश्च । तथाप्यस्मच्छब्दनिर्दिष्टे परोक्षत्वविवक्षायामप्यव्यवधानेन तच्छब्दप्रयोगोऽनुपपन्न इति चेत् । किमस्मच्छब्दनिर्दिष्टे स्वस्मिन् परोक्षत्वविवक्षायामपि तच्छब्दविषयत्वाभावात्तत्र तच्छब्दप्रयोगस्सेकाद्यर्थे आमिना सिञ्चेदित्यादिप्रयोगवदनुपपन्न इत्युच्यते ? अथ वा अस्मच्छब्दनिर्दिष्टे स्वस्मिन् परोक्षत्वाविवक्षायामपि तच्छब्दप्रयोगस्य गवाद्यर्थे गावीगोण्यादिशब्दानामिवासाधुत्वात्तत्प्रयोगो न सम्भवतीत्युच्यते ? उतास्मच्छब्दनिर्दिष्टे स्वस्मिन् परोक्षत्वविवक्षायामपि तच्छब्दप्रयोगस्य काप्यदृष्टत्वेनापूर्वसन्दर्भकल्पनेऽपूर्वत्वादेवास्मिन्सन्दर्भे दोषशङ्का भवत्येवेत्युच्यते । नाद्यः—अस्मच्छब्दनिर्दिष्टे स्वस्मिन् परोक्षत्वविवक्षाया तच्छब्दविषयत्वस्यानिवार्यत्वात् । तच्छब्दप्रयोगस्य पूर्वोपस्थितपरोक्षवस्तु विनान्यस्यानपेक्षितत्वात् । न द्वितीयः—अस्मच्छब्दनिर्दिष्टे स्वस्मिन्परोक्षत्वविवक्षायामपि तच्छब्दो गावीगोण्यादिशब्द इव न प्रयोक्तव्य इत्यर्थे मानाभावात् । न तृतीयः—

"वाक्षारेड्ध्वजधृक् धृपोड्वधिपतिः कुभ्रेट् जजानिर्गणेट्
गोगडोरुड्डरस्सरेड्डुरुनरग्रैवयकभ्राड्डरम् ।
उड्डिड्डूनरकारिधृक त्रिदगिभेडाद्र्याजिनाच्छच्छद-
रसरगाद्म्बुमदम्बुदालिगलरुक् देवो मुदे वो इड" ॥

इति कालिदासप्रणीतेऽपूर्वसन्दर्भाणामपूर्वत्वादेव दुष्टत्वापत्तेः । अन्यैरपि महाकविभिः प्रणीतेषु अपूर्वसन्दर्भाणां दुष्टत्वापत्तेः ।

"अविभिदमितवर्ष्मा प्रस्फोटनक्षपानीमिदसृणिलक्षित
घटकाङ्कमहानिग्रहदक्षो दशशतपलाशगू रक्षेत्" ॥

इत्यभियुक्तप्रणीतेऽपूर्वसन्दर्भाणां दुष्टत्वापत्तेः, कवनस्यैव दुष्टत्वापत्तेश्च । प्रत्युतापूर्वसन्दर्भकल्पने श्लाघनीयगुणत्वं हि सुप्रसिद्धम् । एवं श्लाघनीयगुणे दोषारोप शिवे श्रुतिपुराणादिभिरैदम्पर्येणाभिधीयमानसर्वेश्वरत्वासहिष्णोस्त्वानुरूप एव । त्वयापि

"रामो द्विर्नाभिभाषते ।
तेनैवाहं प्रतीयोत्स्ये रावणं राक्षसाधिपम् ।
अनिहत्य रिपुं विष्णुर्न हि प्रतिनिवर्तते" ॥

इति रामायणवचनोदाहरणपूर्वकं "एतमु एवाहमभ्यागाशिषम् । तस्मान्मम त्वमेकोऽसीति ह कौषीतकिं पुत्रमुवाच" इति श्रुतौ मम त्वमित्यत्रास्मद्युष्मच्छब्दनिर्दिष्टे स्वस्मिन् स्वेनैव कृतः परोक्षत्वनिर्देश उपपन्न इत्यभ्युपगतम् ।

"नैवाहं प्रतियोत्स्ये तं रावणं राक्षसाधिपम्" ।

इत्यादिस्वनुदाहृतोत्तररामायणवचनेनैवाहमित्यत्राहम्पदनिर्दिष्टे स्वस्मिन् स्वेनैव कृतपरोक्षनिर्देशो व्यक्तश्च । किञ्चैतावत्युक्तेऽप्यत्र यद्यनुपपन्न-मारोपयसि तर्हि त्वत्पक्षेऽपि देवबुद्ध्या चोत्तरवाक्यस्थाहम्पदस्य रुद्रान्त-र्यामिपरत्वेन सोऽन्तरादित्यत्रस्थतच्छब्दस्य शब्दतन्निरूपितार्थपरत्वादिति त्वदुक्तरीत्यानुपचरिततच्छब्दार्थस्य प्रकृततच्छब्देन परामर्शाङ्गीकारोऽनुपपन्न एव ।

ननु स्वान्तर्यामित्वविवक्षां विनापि परमात्मत्वेन श्रुत्यन्तरप्रसिद्ध-नारायणस्य तत्पदेन परामर्शोपपत्तिरित्युक्तमिति चेत्सत्यम् । त्वयाप्यस्म-च्छब्दनिर्दिष्टार्थे स्वान्तर्यामित्वविवक्षात्यागं परमात्मरूपपरोक्षत्वविवक्षया-स्मित्यात्रत्यतच्छब्दप्रयोगोऽङ्गीकृत इत्येवोक्तं भवति । सिद्धान्ते च तस्मिन्नर्थेऽपरोक्षत्वविवक्षां विहाय परोक्षत्वविवक्षायां तच्छब्दप्रयोगस्सम्भ-वतीत्युक्तमिति पक्षद्वयेऽप्युक्तं तत्समानमेव ।

एवञ्च शिवस्य सर्वेश्वरत्वपक्षेऽत्रारोपितदोषः स्वपक्ष एवापततीत्यस्य सिद्धत्वेऽपि शिवस्य सर्वेश्वरत्वपक्षेऽयं तच्छब्दोऽनुपपन्न एवेति वक्तुस्त-स्यान्येषामपशकुनाय स्वनासिकाच्छेत्तुरिव बधकबाहितत्वं विज्ञातम् ।

नन्वस्मत्पक्षे स्वान्तर्यामित्वविवक्षापरित्यागमात्रेणैवान्तर्यामिणः परोक्षत्वं सिध्यति । तस्मिन् सोऽन्तरादित्यत्रत्यतच्छब्दप्रयोगस्सम्भवति च । सिद्धान्तपक्षे त्वपरोक्षत्वविवक्षापरित्यागः परोक्षत्वविवक्षा चेत्येतदुभयाङ्गी-कारगौरवदोषस्स्यादिति चेत् । सिद्धान्तपक्षेऽपि शिवेन स्वस्मिन्नपरोक्ष-त्वविवक्षापरित्यागे कृते परोक्षत्वमर्थात्सिद्ध्यतीति स्वस्मिन्कृततच्छब्द-प्रयोग उपपन्न एव । अथ वा स्वस्मिन्परोक्षत्वे विवक्षितेऽपरोक्षत्व-परित्यागोऽर्थात्सिद्ध्यतीति प्रकृततच्छब्दप्रयोग उपपन्न एवेति समानमेव ।

एव समानत्वेऽपि त्वाच्छिष्याण। बालानाश व्यामोहनाय त्वन्निर्मितवश्चनया न विद्वासो व्यामोहयितु शक्या । एवञ्च सोऽन्तरादिति वाक्यस्य शिवान्तर्यामिपरत्वे दूषणपरम्पराया अभिहितत्वेन तद्वाक्यस्य शिवेऽन्तर्यामित्वाभिधानपरत्वमेव न्यायविदा हृदयङ्गमम् ।

एवञ्चास्याथर्वशिरसश्शिवे सर्वेश्वरत्वाभिधानपरत्वे यद्दृष्टानि तात्पर्य ग्राहकलिङ्गानि विस्पष्टानि दृश्यन्ते । तत्र "अहमेक प्रथममास वर्तामि च भविष्यामि च नान्य कश्चन मत्तो व्यतिरिक्त इती" त्युपक्रमस्य,

"यो रुद्रो अग्नौ यो अप्स्वन्तर्य ओषधीर्वीरुध आविवेश ।
इमा विश्वा भुवनानि चक्लृपे तस्मै रुद्राय नमो अस्तु " ॥

इत्युपसहारस्य च शिवे सर्वेश्वरत्वनिश्चायकलिङ्गत्वनैकरूप्य विस्पष्ट मितीदमेक तात्पर्यग्राहकम् । एव शिवस्य "सोऽन्तराद तर प्राविशद्दिशश्चान्तर सम्प्राविश" दित्यनेन सर्वान्तर्यामित्व, "सोऽह नित्यानित्य' इत्यादिना "अहमेकस्सर्वे च" इत्यन्तेन सन्दर्भेण सर्वात्मत्वश्चति ईश्वरत्वलिङ्गेऽभिहिते एवमन्यान्यपीश्वरत्वलिङ्गानि विस्पष्टानि । एव 'स ईशानस्स महेश्वर" इति शिवस्येश्वरत्वे श्रुतिद्वयम् । एवञ्च शिवस्येश्वरत्वनिश्चायकानामभ्यासो विस्पष्ट । एव शिवस्येश्वरताया मानान्तरागम्यत्वेनापूर्वत्व विस्पष्टम् । तथा—

" तमात्मस्थ ये नु पश्यन्ति धीरास्तेषा शान्तिश्शाश्वती नेतरेषाम् " ॥ इति,

" तमीशान पुरुष देवमीड्य निध्याय-तार शान्तिमत्यन्तमेति "। इति च,

शिवस्य स्वरूपज्ञानेन मोक्षरूपफलमिति स्फुटमुक्तम् ।

तथा "देवा ह वै स्वर्ग लोकमगमन्नि" त्यादि, इन्द्रपुरोगमास्सर्वे देवास्त्रिषु कालेषु विद्यमान परमात्मा शिवो दिव्यमङ्गलश्रीमूर्तिरूपेण शिवलोके नित्य सन्निहितस्तिष्ठतीति विज्ञाय त दिदृक्षवो विशेषतस्तत्त्वरूपजिज्ञासवश्च शिवलोक गत्वा अदृष्टपूर्वं शिव तत्र दृष्ट्वा को भवानित्यपृच्छन् । स च शिवोऽहमेक एव त्रिषु कालेषु विद्यमानो नान्यस्सर्वान्तर्यामी सर्वरूपस्सर्वपोषकस्सर्वसहर्ता चेत्यभिधायान्तर्हितोऽभवत् ।

ततो देवाश्शिवमपश्यन्तोऽयमेवास्मद्रक्षिता भगवान् शिव इति शिवशब्दाभिविज्ञाय तमेव शिवं ध्यायन्तोऽस्तुवन्नित्याख्यायिकारूपश्शिवस्येश्वरत्वनिश्चायकोऽर्थवादो विस्पष्टः । अस्याख्यायिकारूपार्थस्य सर्वस्याप्येतदुपनिषद्रम्यत्वं प्रागेव स्फुटीकृतम् । तथा "अहमेकः प्रथममास"-मित्यादौ शिवस्य त्रिषु कालेषु विद्यमानताया अन्यस्याविद्यमानतायाश्च सम्भवः शिवस्येश्वरत्वे उपपत्तिः । त्रिषु कालेष्वविद्यमानस्येश्वरत्वासम्भवात् । अन्याश्चोपपत्तयोऽत्राथर्वशिरसि सर्वान्तर्यामित्वसर्वात्मत्वादिरूपा विज्ञेयाः । एवञ्चाथर्वशिरसि शिवगतसर्वेश्वरत्वप्रतिपादकलिङ्गानां सत्वेनास्याथर्वशिरसश्शिवगतसर्वेश्वरत्वरूपस्वार्थपरत्वमन्येनापि ज्ञातुं शक्यम् ।

यदप्युक्तमथर्वशिरसो वाक्यजातमादित आरभ्याऽऽन्तं विमृश्यमानं शिवस्य परमात्मत्वमेव दृढतरतात्पर्येणाविष्करोतीत्येवञ्चोपपद्यत एव । इन्द्रवामदेवादेरिव शिवस्य जीवत्वबोधकप्रमाणबाहुल्यसद्भावेन तस्य सर्वज्ञत्वादिविशिष्टपरमात्मत्वासम्भवात् । तथा हि—महोपनिषदि "न ब्रह्मा नेशान" इत्यादौ नेशान इत्यनेन "अथ पुनरेव नारायणस्सोऽन्यं कामं मनसाऽध्यायत तस्य ध्यानान्तस्थस्य ललाटात् त्र्यक्षश्शूलपाणिः पुरुषोऽजायत" इत्यादिना "तस्मादीशानो महतां देवानां महादेव" इत्यन्तेन सन्दर्भेण च शिवस्य सृष्टेः प्रागविद्यमानत्वोक्त्या सृष्ट्यनन्तरं नारायणात्तस्योत्पत्त्युक्त्या च तस्य जगत्कारणत्वप्रसक्त्यभावावगमात्सृष्टेः प्राक्तस्याविद्यमानत्वाभिधानेनानन्तरमुत्पत्त्यभिधानेन च तस्यामीषोमादिजीवसमभिव्याहाराच्च सिद्ध एव तस्य जीवभावः ।

एवं "एको ह वै नारायण आसीन्न ब्रह्मा न च शङ्करः । स मुनिर्भूत्वा समचिन्तयत्तत एते व्यजायन्त विश्वे हिरण्यगर्भोऽग्निर्यमवरुणरुद्रास्तस्य हैतस्य वरस्य नारायणस्ये"ति पैङ्गिरहस्यवाक्येन चोदाहृतमहोपनिषत्सन्दर्भप्रतिपन्नार्थस्सर्वोऽप्यवगम्यते । तथा तैत्तिरीये "सोऽब्रवीद्वरं वृणा अहमेव पशूनामधिपतिरसानीति तस्माद्रुद्रः पशूनामधिपतिरि"ति सन्दर्भेण शिवस्य नित्यसिद्धेश्वरत्वाभावबोधकत्वेऽरवशमर्पणाधिपत्यमार्थनेन

तयोरवगमकेन तस्मादिति वरलब्धागन्तुकाधिपत्याभिधानेन च व्यक्त एव तस्य जीवभावः। महाभारते कर्णपर्वणि अस्याः श्रुतेरुपबृंहणसन्दर्भे विस्पष्टोऽयमर्थः।

तत्र त्रिपुरस्थासुरैरर्दितैः देवैः ब्रह्माणमग्रतः कृत्वा शिवं शरणं प्राप्य स्तुतिनमस्कारादिकरणानन्तरं तान् शिवोऽब्रवीत्।

"हन्तव्याश्शत्रवस्सर्वे युष्माकमिति मे मतिः।
न त्वेक उत्सहे हन्तुं बलस्था हि सुरद्विषः॥
मम तेजोबलार्धेन सर्वान्निघ्नत शात्रवान्।

देवाः—

बिभर्तुं तव तेजोऽर्धं न शक्ष्यामो महेश्वर।
सर्वेषां नो बलार्धेन त्वमेव जहि शात्रवान्॥

भगवान्—

मम तेजो न शक्ता हि सर्वे धारयितुं यदि।
अहमेनान् हनिष्यामि युष्मत्तेजोर्धसंयुतः॥

दीयतां तु बलार्धं मे सर्वैरपि पृथक्पृथक्।
पशुत्वश्चैव मे लोकास्सर्वे कल्पन्तु पण्डिताः॥

पशूनान्तु पतित्वे मे भवत्वद्य दिवौकसः।
एवं न पापं प्राप्स्यामि पशून् हत्वा सुरद्विषः।

कल्पयध्व रथं दिव्यं रथाश्वांश्चैव वारणान्॥
धनुश्शरं सारथिश्च ततो जेष्यामि वो रिपून्"।

इत्यादिशिववचनानन्तरम्—

"तत्तथेत्यब्रुवन्देवा देवदेवनमस्कृतम्।
ऊचुश्च ते गृहाणेदं तेजसोऽर्धमिति प्रभुम्॥

प्रत्युवाच तथेत्येवं शूलभृद्राजसत्तम।
ततस्ते प्रददुस्सर्वे तेजसोऽर्धं महात्मने॥

सर्वमादाय सर्वेषां तेजसोऽर्धं दिवौकसाम् ।
तेजसोऽभ्यधिको भूत्वा भूयोऽप्यतिबलोऽभवत् ॥

ततः प्रभृति देवानां देवदेवोऽभवद्भवः ।
पतिश्च सर्वभूतानां पशूनाञ्चाभवत्तदा ॥

तस्मात्पशुपतिश्चोक्तो भवत्वाच्च भवेति वै ।
अतोऽभिषिषिचुस्सर्वे सुरा रुद्रं पुरारिणम् ॥
महादेव इति ख्यातस्तदा प्रभृति शङ्करः" ।

तदनन्तरम्—

"तानब्रवीत्पुनर्देवो मत्तः श्रेष्ठतरो हि यः ।
तं सारथिं कुरुध्वं मे स्वयं सञ्चिन्त्य मा चिरम्" ॥

इति शिववचनमाकर्ण्य देवास्सर्वे ब्रह्मणोऽन्तिकं गत्वोचुः—

"योद्धुर्बलेन सत्त्वेन वीर्येण नियमेन च ।
अधिकस्सारथिः कार्यो नास्ति चान्योऽधिको भवान् ॥

स भवांस्तारयेत्तस्मात्कुरु सारथ्यमव्यय ।
भवानभ्यधिकस्त्वत्तो नान्योऽस्ति भविता त्विह" ॥

इत्युक्तो देवान् ब्रह्माब्रवीत्—

"एवमेतत्सुरास्तथ्यं नान्यस्त्वभ्यधिकोऽभवत् ।
सारथित्वं गमिष्यामि शङ्करस्य महात्मनः ॥
सर्वथा रथिनः श्रेयान् कर्तव्यो रथसारथिः" । इति ।

ततस्सारथित्वे कर्तुमागतं ब्रह्माणं सारथित्वेनाङ्गीकृतवान् शिव इत्युक्तम् । तत्र नित्यसिद्धसर्वेश्वरत्वाभावावगमिकया

"न त्वेक उत्सहे हन्तुं बलस्था हि सुरद्विषः" ।

इत्युक्तया तदवगमिकया पशूनां पतित्वं मे अद्य भवत्वित्युक्तया तथावगमिकया "एवं न पापं प्राप्स्यामि" इत्युक्तया तथावगमिकया "सर्वेषामर्धमर्धं बलं गृहीत्वातिबलोऽभवदि" त्युक्तया ततस्तदाप्रभृति

शिवो देवदेवस्सकलभूताना पशूना पतिश्चाभवदित्युक्त्या तदाप्रभृति महादेव इति ख्यात इत्युक्त्या मत्त श्रेष्ठतर सारथिं कुरुध्वमिति शिवोक्त्या ब्रह्माण प्रति योध्दुर्बलेन सव्येनेत्यादिदेवोक्त्या रथिनोऽधिकस्सारथि कार्य इत्येतत्तथ्यमेव, शिवादधिक एवाह सारथिश्च भविष्यामीति देवान् प्रति ब्रह्मोक्त्या सारथ्यं कर्तुमागत ब्रह्माणमङ्गीकृतवान् शिव इत्युक्त्या च सिद्ध एव शिवस्य जीवमात्र । एतत्सन्दर्भस्योदाहततैत्तिरीय-श्रुतिवचनोपबृंहकत्वत्र शब्दतोऽर्थतश्च सिद्धमेव । तस्मात्पशुपतिश्चोक्त इति तच्छ्रुतिवचनात्स्वात्तत्पठितत्वात् । शिवापेक्षया ब्रह्मण आधिक्य भारत इवान्यत्रापि दर्शितम्—

"रुद्र समाश्रिता देवा रुद्रो ब्रह्माणमाश्रित· ।
ब्रह्मा मामाश्रितो राजन् नाह कश्चिदुपाश्रित " ॥

इति श्रीकृष्णवचने हरिवंशे—

"नाहं धन्यो न चाश्चर्यो नैव मा वक्तुमर्हसि ।
मत्त श्रेष्ठतरो जज्ञे जगत्स्रष्टा द्विजोत्तम ॥
ब्रह्मा प्रजापतिर्धन्यस्स चाश्चर्यस्सुरेष्वपि " ।

इति नारद प्रति शिववचनसन्दर्भे, एव शतपथेऽष्टमूर्तिब्राह्मणे — "अभूद्वा इदमप्रतिष्ठित" मित्यारभ्य "भूतानाश्च प्रजापतिस्संवत्सराय दीक्षितभूताना पतिर्गृहपतिरासीदुषा पत्नी" त्यादिकमुक्त्वा "भूताना संवत्सर उषसि रेतोऽसिञ्चत् संवत्सरे कुमारोऽजायत सोऽरोदीत प्रजापतिरब्रवीत् कुमार किं रोदिषि यच्छ्रमात्तपसोऽधिजातोऽसीति । सोऽब्रवीदनपहतपाप्मा वा अहमस्मि, अनाहितनामा नाम मे धेहि पाप्मनोऽपहत्या इति तमब्रवीद्रुद्रोऽसीति तदस्य नामाकरोत् । अग्निस्तद्रूपमभव"-दित्यारभ्य "भवोऽसीति शर्वोऽसीति पशुपतिरसीति उग्रोऽसीति भीमोऽसीति महादेवोऽसीति" सन्दर्भे, तथा शैलालिब्राह्मणे च "स प्रजापतिं पितरमभ्या-यच्छत्तमब्रवीत्कथमभ्यायच्छसीति नाम मे कुर्वन्तीत्यब्रवीन्न वा विहितेन नाम्ना नमस्यामीति ॥ वै त्वमित्यब्रवीत् सर्वै त्वमित्यब्रवीद्भव एवेति यद्भव आप " ।

इत्याम्य भवशर्वादिनामकरण सलिलाद्यष्टमूर्तिप्रदानवोक्त्वा "एषोऽष्टनाम्ना अष्टधा विहितो महादेव" इत्यभिधाय सन्दर्भे च शिवस्य मूर्त्यष्टक नामाष्टकश्च प्रजापतिना दत्तमित्युक्त्या च तस्य स एवार्थोऽवगम्यते। शिवस्य नित्यमिद्धसर्वेश्वरत्वे तस्य सर्वात्मत्वेनाष्टमूर्तित्वं सिद्धमेवेति तत् ब्रह्मणा दत्तमित्यभिधानवचनमसङ्गतं स्यात्।

न चाष्टमूर्तित्वोक्त्या तस्य सार्वात्म्यमुक्तम्, तस्य चेश्वरत्वलिङ्गत्वं मसिद्धमिति वाच्यम्। ब्रह्मण एव सर्वात्मत्वाभावेन ब्रह्मणा दत्त-यत्किञ्चिन्मूर्त्यष्टकेन सार्वात्म्यासिद्ध्या तादृशमूर्त्यष्टकस्य सर्वेश्वरत्वगमकत्वासम्भवात्। एवमुदाहृतशतपथवाक्यसन्दर्भे "अनपहतपाप्मा वा अहमस्म्यनाहितनामा नाम मे धेहि पाप्मनोऽपहत्या मम" इति शिववचनेन शिवशक्त्याख्यानपहतपाप्मत्वोक्त्या सोऽर्थस्सिद्ध एव। एवमुदाहृतकर्णपर्ववचनसन्दर्भे—

"पशूनान्तु पतित्वं मे भवन्तु दिवौकसः।
एवं न पाप माप्स्यामि पशून् हत्वा सुरद्विष." ॥

इति शिवस्य वचनेनावगतया तस्य पापभिया च सोऽर्थोऽवगम्यते।

वामनपुराणे शिवो ब्रह्मणशिरश्छित्वा ब्रह्महत्या प्राप्य तयातीव क्लेशितश्राद्विष्णुनोपदिष्ट काश्या दशाश्वमेधतीर्थस्नानेन निष्पापोऽभवदित्युक्त्या च, एव मैत्रायणोपनिषदि —

"अथ योऽह खलु वा वास्य तामसोऽशोऽसौ ॥ योऽय रुद्र" इति तामसत्वोक्त्या शिवस्य सोऽर्थस्सिद्ध। तैत्तिरीये "रुद्रो वै क्रूर" इति तस्य क्रूरत्वोक्त्या च, वामनपुराणे दक्षाध्वरे देव्या शरीरे त्यक्ते शिवो वर्षसहस्रचतुष्टयं रुरोदेत्युक्त्या च, तथा रामायणे—

"पुरा राम कृतोद्वाहश्शितिकण्ठो महातपा।
दृष्ट्वा च स्पृहया देवीं मैथुनायोपचक्रमे ॥
शितिकण्ठस्य देवस्य दिव्यं वर्षशतं गतम्।
एव मन्मथयुद्धे तु तयोरासीत्पराजय:" ॥

इति सन्दर्भे मनुष्यमानेन षट्त्रिंशत्सहस्रवर्षपरतिहेतुभूतया "स्पृष्ट्वा च स्पृहये" त्यनेन शिवस्यावगम्यमानस्पृहया च सोऽर्थोऽवगम्यते । योग सूत्रकारेण "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर" इति "विपाको जात्यायुर्भोगा," इति च सूत्राभ्या जगदीश्वरो जातिरहित इत्युक्त्या बृहदारण्योपनिषदि "तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणस्सोमो रुद्र" इति शिवस्य क्षत्रियत्वोक्त्या च स एव सिद्धः ।

न चायं रुद्र एकादशरुद्रान्तर्गत इति भ्रमितव्यम । एतदुत्तर-खण्डे देवतोद्देश्येष्वाकाशरुद्राणा पृथगाम्नानात् । रामतापिन्युपनिषदि अगस्त्यसंहितायाश्च काश्या निवसता स्वभक्ताना शिवो मोक्षं दातुमशक्नुवन् श्रीरामं चिरमुपासितवान् । तस्मै प्रसन्नः श्रीरामः तेषां मोक्षं दत्तवानित्युक्त्या, हरिवंशे मोक्षार्थं घण्टाकर्णेनोपासितस्तस्मै प्रसन्नोऽपि नाहं मोक्षदाने शक्तः किन्तु विष्णुरेव मोक्षदाने समर्थ इति शिवोक्त्या च सोऽर्थस्सिद्धः ।

सुबालोपनिषदि नारायणस्य सर्वान्तर्यामित्वप्रतिपादनप्रस्तावे "यो रुद्रे यो नाभ्या" मित्यादिना शिवस्य नारायणनियम्यत्वोक्त्या च, एवं तैत्तिरीये—

"हरिं हरन्तमनुयन्ति देवा विश्वस्येशानं वृषभं मतीनाम्"

इति सन्दर्भे हरिं हरन्तमित्यनयोस्सामानाधिकरण्येनैवान्वयः । सामानाधिकरण्येनान्वये सम्भवति तमपहाय व्यधिकरणान्वयाङ्गीकारो न सम्भवत्येव । तथात्वे निषादस्थपत्यधिकरणविरोधापत्ते । एतदन्वयस्याज्ञानविरोधित्वेनास्य चरमश्रुतानुसारेण नयने उपक्रमाधिकरणविरोधापत्तेश्च । हरिं हरन्तमित्यत्र कर्माकाङ्क्षायामीशानमित्यस्य कर्मत्वेनान्वयः । तथा चेशान हरन्तं हरिं देवा अनुसरन्तीति शिवस्य विष्णुशिष्यत्वोक्त्या तस्य स एवार्थोऽवगम्यते ।

पाद्मे—

"हन्तुमभ्यागतं रौद्रं शरभं नरकेसरी ।
विददार नखैस्तीक्ष्णैर्हिरण्यकशिपुं यथा ॥

निकृत्तबाहूरुशिरा वज्रकल्पमुखैर्नखैः ।
मेरुपृष्ठे नृसिंहेन शरभः सहसापतत् ।" इत्यादिसन्दर्भे

विष्णुधर्मोत्तरे—

"ब्रह्मा शम्भुस्तथैवार्कश्चन्द्रमाश्च शतक्रतुः ।
एवमाद्यास्तथैवान्ये युक्ता वैष्णवतेजसा ॥

जगत्कार्यावसाने तु वियुज्यन्ते च तेजसा ।
वितेजसश्च ते सर्वे पञ्चत्वमुपयान्ति च ॥"

"ब्रह्मादिषु प्रलीनेषु नष्टे लोके चराचरे ।
आभूतसंप्लवे प्राप्ते प्रलीने प्रकृतौ महान् ॥
एकस्तिष्ठति विश्वात्मा स तु नारायणः प्रभुः" इति

सन्दर्भे च सोऽर्थो विस्पष्ट एवेत्यादिश्रुतिपुराणवचनैश्शिवे जीवत्वस्य सिद्धत्वेन तस्याथर्वशिरःप्रभृतिष्वभिहितं जगत्कारणत्वादिविशिष्टेश्वरत्वं न सम्भवति । जीवत्वसमानाधिकरणतया विशिष्टेश्वरत्वासम्भवात् । अन्यथा कौषीतक्युपनिषदि 'मामेव विजानीहि प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व" इत्यादीन्द्रवाक्येष्ववगम्यमानस्य ज्ञेयत्वोपास्यत्वादिविशिष्टेश्वरत्वस्येन्द्रगतत्वापत्तेः । "अहं मनुरभवं सूर्यश्च" इति वामदेववचनावगतसार्वात्म्यस्य वामदेवगतत्वापत्तेश्च । नचेष्टापत्तिः । "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" दित्यधिकरणे इन्द्रवामदेववचनाभ्यामवगतं सर्वज्ञत्वादिविशिष्टेश्वरत्वं तदुभयान्तर्यामिगतमिति सिद्धान्तविरोधापत्तेः । "इन्द्रो मायाभिः पुरुरूप ईयत" इत्यत्रेन्द्रशब्दस्येन्द्राभिन्नपरमात्मपरत्वसिद्धान्तविरोधापत्तेश्च । यदीन्द्रवामदेवयोः श्रुत्यन्तरे जीवत्वावगमेन, तयोर्विशिष्टेश्वरत्वानुपपत्त्या तदुभयान्तर्यामिण्यस्तदभिधानं युक्तमित्युच्येत तर्हि शिवस्यापि श्रुतिपुराणवचनेभ्यो जीवत्वावगमेन विशिष्टेश्वरत्वानुपपत्त्याथर्वशिरःप्रभृतिषु शिवान्तर्यामिण एवेश्वरत्वमिति समानम् ।

नन्वस्मिन्नथर्वशिरसि "यो वै रुद्रस्स भगवान्यश्च विष्णु"रिति विष्णौ रुद्रविभूतित्वाभिधानेनाथर्वशिरस्यायां "ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्त" इति विष्णोरुत्पत्त्यभिधानेन तस्यापि जीवत्वं किं न स्यादिति

चेन्न। विष्णोर्वैकुण्ठरियनस्य सत एव रघुवंशवसुदेवदशरथादिभ्य उत्पन्नत्वमिव तेभ्य उत्पन्नत्वमिव च शिवादुत्पन्नत्वं तद्विभूतित्वशामित्यरूप सम्भवतीति तेन विष्णोर्जीवत्वप्रसक्त्यभावात्।

नन्वथर्वशिरआदिषु मूर्तित्रयान्तर्गतत्वेन श्रूयमाणसंहाररुद्रस्यैवोक्तास्सर्वे दोषा न तुरीयशिवगताः। अतस्तुरीयशिवस्य सर्वेश्वरत्व निष्प्रत्यूहमिति चेन्न। तुरीयशिवसद्भावे मानाभावात्।

न च श्रुतिभिर्विशिष्टपरमात्मनि प्रयुक्तास्तस्मिन् रूढाश्शिवभवेशानादिशब्दा एव प्रमाणमिति वाच्यम्। तेषां शब्दानां तत्र रूढत्वे मानाभावात्।

न चाभिधानकोश एव परमात्मनि तेषां रूढत्वे मानमिति वाच्यम्। अभिधानकोशे ब्रह्मविष्णुनामभिस्सह शिवनामानि पठितानीति तत्समभिव्याहारमहिम्ना मूर्तित्रयान्तर्गतरुद्रे रूढाश्शिवादिशब्दा इति कोशकाराशयावगमेन शिवादिशब्दानां मूर्तित्रयोत्तीर्णशिवे रूढत्वप्रापककोशस्यैवाभावात्। न हि ब्रह्मविष्णुरुद्रेन्द्रा इत्यादिश्रुतिषु ब्रह्मविष्णुरुद्रादिकारणत्वेनान्यश्शिवोऽवगम्यत इत्येतावता तुरीयशिवकल्पनं युक्तम्। तथात्वे तुरीयशिवरूपधर्मिकल्पनं तस्मिन्सर्वज्ञत्वादिरूपधर्मकल्पनं तस्मिन् शिवादिशब्दानां कोशात्मकप्रमाणं विनैव रूढिकल्पनमित्यतिगौरवाश्रयणापत्तेः।

किञ्च पार्वतीपतित्वस्कन्दविनायकजनकत्वविशेषणको हि तुरीयशिवसिद्ध्यति। न चेष्टापत्तिः। तुरीयशिवपत्न्याः पार्वत्याः कल्पनं तत्र पार्वत्यादिशब्दानां प्रमाणं विनैव रूढिकल्पनं तत्पुत्रयोर्विनायकस्कन्दयोः कल्पनं तयोर्नाम्नां प्रमाणं विना तयोः रूढिकल्पनमित्यत्यन्ताप्रामाणिकातिगौरवस्याङ्गीकारापत्तेः। अभिधानकोशे पठितपार्वतीस्कन्दविनायकनाम्ना मूर्तित्रयान्तर्गतशिवस्य नामभिस्समभिव्याहारेण तत्पत्नीतत्पुत्रनामत्वं विस्पष्टमेव। बाणासुरयुद्धादौ पराजयादिना विष्ण्वपेक्षया निकर्षवति शिवे मूर्तित्रयान्तर्गतशिवत्वस्य तथापि संमतत्वेन तस्मिन् शिवे पार्वतीपतित्वविनायकस्कन्दजनकत्वादीनि विष्णुपुराणभागवतहरिवंशादिषु सुप्रसिद्धानि च।

किञ्च हिमवन्नामके पर्वतराजे पार्वतीनामकतत्कन्यायाश्च एकत्वस्य सकलपुराणेतिहासादिषु सुप्रसिद्धया सकलपुराणादिविरोधेन पार्वतीनानात्वकल्पनामनोरथस्याप्यवकाशाभावेन मूर्तित्रयान्तर्गततुरीयशिवयोः पार्वतीपतित्वकल्पनमनोरथस्यापि नावकाशः। उमाशिवादीनां क्वचिन्नानात्वश्रवणञ्च जीवस्य ततत्सौभर्यादेरिव योगमहिम्ना एकनानात्वमादायोपपन्नमेव।

किञ्च श्रुतिषु प्रतीयत इत्येतावता शिवादिशब्दरूढ्यर्थत्वेन तुरीयशिवकल्पने "आकाशस्तल्लिङ्गा" दित्यधिकरणे उदाहृतायां "अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायण" मिति श्रुतावाकाशशब्दरूढ्यर्थभूते जडाकाशे आकाशादिजगत्कारणत्वासम्भवेनाकाशशब्दो यौगिक्या वृत्त्या श्रुत्यन्तरप्रसिद्धपरमात्मपर इति सिद्धान्तविरोधः। आकाशशब्दरूढ्यर्थभूतस्य जगत्कारणत्वादियोग्याकाशस्यान्यस्य कल्प्यत्वापत्तेः। एवं "अत एव प्राण" इत्यधिकरणविरोधस्य "ज्योतिश्चरणाभिधाना" दित्यधिकरणविरोधस्य चापत्तिर्दुर्वारा। "प्राणस्तथानुगमा" दित्यधिकरणे मामेव विजानीहीत्याद्युदाहृतश्रुतावगतेश्वरताया इन्द्रस्यासम्भवेन जगत्कारणत्वादियोग्यस्यान्यस्येन्द्रादिशब्दरूढ्यर्थभूतस्य कल्पनापत्त्या तदधिकरणविरोधापत्तेश्च। किञ्च विम्बचैतन्यस्यैव सर्वकारणत्वं सर्वात्मत्वञ्चेत्यद्वैतवादिनस्तव मतरीत्या शिवादिशब्दरूढ्यर्थभूतस्य मूर्तिरूपशिवस्य तुरीयत्वप्रत्यायकश्रुतिवचनस्यैवाभावेन तस्य तुरीयत्वसिद्धेः प्रसक्त्यभावात्। "न ब्रह्मा नेशान" इति सृष्टेः प्राक् शिवस्याविद्यमानत्वाभिधायकश्रुतिविरोधेन पुराणादिवचनैस्तस्य तुरीयत्वासिद्धेः।

न च पुराणादिवचनैर्नेशान इति श्रुतिवचनस्य, सृष्टेः प्राङ्मूर्तित्रयान्तर्गतशिवस्याविद्यमानत्वाभिधायकमिदं वचनं न तुरीयशिवस्य तथाभिधायकमित्येकदेशबाधकल्पनं युक्तम्। विरोधाधिकरणस्य दत्तजलाञ्जलित्वापत्तेः। तस्मादप्रसिद्धतुरीयशिवे श्रुतीनां तात्पर्यकल्पनमसङ्गतमेव।

अत एव यथा "आकाशस्तल्लिङ्गा" दित्याद्यधिकरणेषु आकाशादिशब्द-रूढ्यर्थभूताना जगत्कारणत्वायत्सम्भवेनाकाशादिशब्दाना यौगिक्या वृत्त्या श्रुत्यन्तर यौगिक्या आकाशादिशब्दार्थत्वेन प्रसिद्धपरमात्मपरत्वमेव निर्णीतम् तथा श्वेताश्वतरकैवल्यादिषु उपनिषत्सु श्रूयमाणशिवेशानादिशब्दाना यौगिक्या वृत्त्या श्रुत्यन्तरेषु यौगिक्या वृत्त्या शिवेशानादिशब्दार्थत्वेन प्रसिद्धनारायणपरत्वमेवेति तासामुपनिषदा नारायणपरत्वमेव न्याय्यम् । प्रसिद्धश्च नारायणस्य यौगिक्या वृत्त्या शिवेशानादिशब्दार्थत्व महोपनिषत्तैत्तिरीयोपनिषदो "आत्मेश्वर शाश्वत शिवमच्युत" मित्यत्र, नृसिंहतापिन्याश्च—

> "ऋत सत्य पर ब्रह्म पुरुष कृष्णपिङ्गलम् ।
> ऊर्ध्वरेत विरूपाक्ष विश्वरूपाय वै नम ।
>
> उमापति पशुपति पिनाकी ह्यमितद्युति" । इत्यत्र ।

यथा कौषीतकयामिन्द्रपरत्वेन प्रतीयमानाना 'मामेव विजानीहि" त्यादीन्द्रवाक्यगताना मामित्यादीनामिन्द्रान्तर्यामिपरमात्मपरत्व, तथाथर्वशिरसि शिवपरत्वेन प्रतीयमानाना शिववाक्यगतास्मच्छब्दाना शिवान्तर्यामिनारायण-परत्वमेवेत्यथर्वशिरउपनिषदस्सर्वस्या अपि नारायणपरत्वमेव न्याय्यम् । अत एव सुबालोपनिषदि "वेदशास्त्रैरुपास्यमानो न च वेदशास्त्राण्युपास्यनी" त्यनेन सकलवेदशास्त्राणा नारायणपरत्व दर्शितम् । "वेदैश्च सर्वैरहमेव वेद्य" इति भगवद्गीतावचनेन च ।

एवञ्च—

> "अन्य देव परत्वेन वदन्त्यज्ञानमोहिता ।
> नारायणाज्जगन्नाथात्ते वै पाषण्डिन स्मृता" ॥

इति पाद्मपुराणादिवचनशतान्यप्यनुसृतानि भवन्तीति ।

तत्राभिधीयते । यदुक्त बहुभि श्रुतिपुराणादिवचनैश्शिवस्य जीवभावावगमेन तस्येश्वरत्व न सम्भवतीति तत्कि शिवस्येश्वरत्वप्रत्यायकवचनेभ्यो दुर्बलवचनैरेव शिवे प्रतीत जीवत्वमङ्गीकृत्य ? अथ वा तेभ्य प्रबलै प्रतीतम् ?

नाद्यः—ब्रह्मविष्णिवत्यादिभिर्विष्णोरुत्पत्त्याद्यभिधायकश्रुतिवचनैरुत्पन्नत्वाज्ज्ञत्वदुर्बलत्वदुःखित्वकामित्वक्रोधित्वनाश्यत्वभेद्यत्वोपासकत्वाभिधायकैः पुराणादिवचनैश्च तस्यापि जीवत्वापत्तेः ।

न च विष्णावुत्पत्त्यादिदोषाणामभिनयरूपत्वाङ्गीकारेण न जीवत्वप्रत्यायकत्वमिति वाच्यम् । शिवे चोत्पत्त्यादिदोषाणामभिनयरूपत्वाङ्गीकारेण जीवत्वद्योतकत्वाभावस्य समानत्वात् । दुर्बलैः प्रबलानां बाधाङ्गीकारे सकलतन्त्राणां समुच्छेदापत्तेश्च ।

न द्वितीयः—शिवस्येश्वरत्वाभिधायिकास्वथर्वशिरःश्वेताश्वतरकैवल्योपनिषत्सु स्वार्थतात्पर्यग्राहकषड्विधतात्पर्यलिङ्गानां सत्त्वेन शिवस्येश्वरत्वपरतदथर्वशिरःप्रभृतिषु तल्लिङ्गानां दर्शितत्वेनोपनिषच्चतुष्टयादिसन्दर्भेभ्यः शिवे जीवत्वप्रत्यायकत्वेन त्वदुदाहृतानां प्राबल्यस्य प्रसक्त्यभावात् । तेषु वचनेषु स्वार्थतात्पर्यग्राहकाणामुपक्रमोपसंहारयोरैकरूप्यादिषड्विधलिङ्गानामभावेन दौर्बल्यस्यैव सिद्धत्वात् । किञ्च त्वदुदाहृतवचनानामर्थवादतया स्वार्थतात्पर्याभावेन दौर्बल्यस्य सिद्धत्वात् ।

सिद्धं हि त्वदुदाहृतवचनानामर्थवादत्वम् । तथा हि महोपनिषदि "एको ह वै नारायण आसी" दित्यादिना नारायणस्याभिहितजगत्कारणत्वदृढीकरणायैव "नेशान" इत्यादिना शिवस्याविद्यमानत्वमुत्पन्नत्वञ्चोक्तमिति तदुभयप्रतिपादकवचनयोरर्थवादतयाऽसिद्धत्वेन तद्वचनयोर्नारायणस्य जगत्कारणत्वदृढीकरण एव तात्पर्यं न तु शिवस्याविद्यमानत्वोत्पन्नत्वाभिधानेऽपि । उभयत्र तात्पर्यकल्पने वाक्यभेदापत्तेः । किञ्च विष्णोरपि सृष्टेः प्राङ्मूर्तिराहित्यस्योक्तत्वाच्च । सृष्टेः प्राक् तदविद्यमानत्वं तदनन्तरमुत्पन्नत्वञ्च शिवस्य श्रीमूर्तिरूपस्यैव न बिम्बचैतन्यरूपस्य नेशान इत्यादिगतेशानशब्दस्य श्रीमूर्तिरूपशिवे रूढत्वात् । तत्रैव "त्र्यक्षः शूलपाणिः पुरुषोऽजायत" इति तस्य श्रीमूर्तिरूपताया व्यक्तत्वाच्च सर्वेषामनादिताया आवश्यकत्वेन कस्यापि चैतन्यरूपेण सृष्टेः प्रागविद्यमानत्वासम्भवात् । सकलजगदुदयस्थितिलयहेतुभूतबिम्बचैतन्यनारायणस्यैक्याङ्गीकारेण विरोधलेशस्याप्यभावात् ।

अपि चैतदथर्वशिरःप्रभृतिषु "अहमेकः प्रथममास" मित्यादिना सृष्टेः प्राक् शिवस्यैकस्यैवावस्थितेरन्यस्य कस्याप्यविद्यमानतायाश्च तात्पर्येणैवोक्तत्वात् । तन्महोपनिषद्यपि "नेशान" इत्यादावस्यानेन प्रयुक्तेशानश्रुत्या महतां देवानां महादेवत्वलिङ्गेन च शिवस्य सर्वेश्वरतायासिद्धत्वात् । एतच्छ्रुतिलिङ्गविरोधे शिवस्य जीवत्वप्रत्यायकाविद्यमानत्वोत्पन्नत्वाभिधायकवाक्यद्वयस्यैवान्यथा नेयत्वात् । तद्वाक्यस्याभिनयरूपोत्पत्त्यभिधायकत्वसम्भवात् । सकलजगदुदयस्थितिलयहेतुभूतचिन्मचैतन्यरूपेण शिवनारायणयोरैक्याङ्गीकारेण विरोधलेशस्याप्यभावात् । पैङ्गिरहस्यवचनस्याप्युदाहृतमहोपनिषद्वचनद्वयस्योक्तगतिरेव द्रष्टव्या । एतद्वचनस्य तद्वचनद्वयस्य चैकार्थकत्वात् । "न ब्रह्मा न च शङ्कर" इत्यत्रावगतसर्वेशङ्करत्वलिङ्गेन शिवस्य सर्वेश्वरतायास्तत्रापि सिद्धत्वाच्च । "सोऽब्रवीद्वरं वृणा" इत्यादितैत्तिरीयवाक्यस्य स्पष्टमेवासदर्थवादत्वम् ।

यथा श्रीकृष्णरूपनारायण सर्वेश्वरस्सन्नेव गोकुललोकानुग्रहाय चौर्येण नवनीतादिकं जग्राह । यथा वा गोवर्धनमुद्धृत्य गवां रक्षणानन्तरं सुरभिप्रभृतीनां गवां देवेन्द्रस्य चानुग्रहाय देवेन्द्रसमर्पितं गवेन्द्रत्वं गोविन्द इति नाम च प्राप्तवान् । वर्णितश्चैतद्विष्णुपुराणादौ । तथा शिवस्सर्वेश्वरस्सन्नेव देवानामनुग्रहायैव तेभ्यः पशुपतित्वं तद्बलार्धं च जग्राह । तदेव वर्णितं सोऽब्रवीदित्यादिश्रुतौ कर्णपर्वसन्दर्भादौ चेत्येतत्पशुपतित्वादिग्रहणं शिवस्य न जीवत्वप्रत्यायकं न वा तस्येश्वरत्वबाधकम् । यथा श्रीकृष्णरूपनारायणोऽप्रमेयबलस्सन् कालयवनबहुमानादिसिद्ध्यै कालयवनस्याभिमतमेव स्वस्मादाधिक्यं तत्कालयवनात्स्वस्मिन् दौर्बल्यञ्चाङ्गीकृत्य तस्मिन्कालयवने हन्तुमागतेऽतिवेगेन पलायितवान् । उक्तञ्च तद्विष्णुपुराणादौ । तथा शिवो विश्वाधिकस्सन्नेव ब्रह्मादीनां सन्तोषसिद्ध्यै ब्रह्मादिषु स्वस्मादभिमतमेवाधिक्यं तेभ्यः स्वस्मिन्निकृष्टत्वञ्चाङ्गीकृत्य ब्रह्मादीनामाधिक्यमुक्तवान् । तदेवाभिहितं प्रागुदाहृतकर्णपर्वादिसन्दर्भे । "अभूद्वा इदमप्रतिष्ठित" मित्यादेश्शतपथेऽष्टमूर्तिब्राह्मणवाक्यसन्दर्भस्य तथा "स प्रजापतिं पितरमभ्यायच्छ" दित्यादेः शैलालिब्राह्मणवचनसन्दर्भस्य च यथा कृष्णावतारे नारायणस्य गर्गाचार्यकृतकृष्णवासुदेवादिनाम्नां

गोवर्धनमुद्धृत्य गवां रक्षणानन्तरं देवेन्द्रकृतगोविन्द इति नाम्नः केशिवधानन्तरं नारदमुनिकृतकेशव इति नाम्नश्चानादित्वमुपपद्यते, तथा शिवस्य ब्रह्मणा कृतनाम्नामनादित्वमुपपद्यत एव । यथा वसुदेवाज्जातस्य श्रीकृष्णरूपनारायणस्य वसुदेवो नामाकारयत्तथा ब्रह्मणस्सकाशाज्जातस्य शिवस्य ब्रह्मा नामाकरोदित्यस्य उदाहृतश्रुतिवचनसन्दर्भयोरवगतस्य शिवे जीवभावावगमहेतुत्वासम्भवात् । यथा श्रीकृष्णरूपो नारायणश्चौर्येण गोकुले क्षीरादिकं जग्राहेत्यादिसकलवचनानि तस्य क्षीरसागरमध्यनिवासित्वाभिधायकवचनैर्नारायणस्येश्वरत्वाभिधायकश्रुतिवचनसहायेनात्यन्तप्रबलैर्बाधितानीति तस्य क्षीराद्यलाभबोधनासमर्थानि सन्ति नारायणो गोकुलौकानुग्रहाय तदीयं क्षीरादिकं चौर्येणाग्रहीदित्यर्थे पर्यवस्यन्ति, तथा शिवो ब्रह्मणा समर्पितमष्टमूर्तित्वं प्राप्तवानित्युदाहृतश्रुतिवचनानि तस्य स्वतःसिद्धसार्वात्म्यपरैरेतदथर्वशिरउपनिषदादिवचनैस्त्वदुदाहृतवचनजातापेक्षया तेषां बहुत्वेन शिवस्येश्वरत्वपरश्रुतिलिङ्गवाक्यसहायेन च प्रबलैर्बाधितानीति तस्य सार्वात्म्याभावबोधनासमर्थानि सन्ति शिवो ब्रह्मणोऽनुजिघृक्षया ततोऽष्टमूर्तित्वं प्राप्तवानित्यर्थे पर्यवस्यन्तीति ब्रह्मणस्सकाशात्प्राप्तमष्टमूर्तित्वं शिवे न जीवभावावगमनसमर्थम् ।

एवं यथा रामायणे—

"न मद्विधो दुष्कृतकर्मकारी मन्ये द्वितीयोऽस्ति वसुन्धरायाम् ।
शोकानुशोको हि परम्परायां मामेति भिन्दन् हृदयं मनश्च" ॥

इत्यादीनाम्;

"राज्याद्भ्रंशो वने वासस्सीता नष्टा द्विजो हतः ।
ईदृशीयं ममालक्ष्मीर्निर्दहेदपि पावकम्" ॥

इत्यादिवचनानाञ्च नारायणस्य सर्वेश्वरत्वाभिधायकश्रुतिवचनैर्बाधितानां श्रीरामरूपनारायणे कर्मबन्धमभिधातुमशक्नुवतां मृत्वादिमहदपराधस्यातिप्राबल्यद्योतनाय श्रीरामरूपनारायणो नटवत् कर्मबन्धाभिनयं कृतवानित्यर्थपरत्वम् । तथा—"अनपहतपाप्मा वा अहमस्मि अनाहितनामा" इत्यादिश्रुतितदुपबृंहकवामनपुराणादिवचनानां समस्तेश्वरत्वबोधकश्रुतिवचनैर्बहुभिर्बाधितानां शिवे कर्मबन्धं वक्तुमशक्नुवतां नामकरणस्य

पापनिवर्तकत्वद्योतनाय महदपराधस्य प्राबल्यद्योतनाय च शिवो नटवत् कर्मचन्याभिनयं कृतवानित्यर्थपरत्वमेवेत्येतैर्वचनैश्शिवस्य जीवत्वं सिद्धयतीति केषांचिदत्यन्तदृढनराशाया न साफल्यप्रसक्तिगन्धोऽपि ।

एवं शिवे तामसत्वाभिधायकस्य "अथ यो ह खलु वा अस्य" इति मैत्रायणोपनिषद्वचनस्य शिवे ईश्वरत्वपरश्रुतिलिङ्गवाक्यैर्बहुभिर्बाधितस्य शिवे स्वाधीनतया विद्यमानतम परत्वमेव । शिवाधीनं तम एव तमस्त्वेन रूपेणाभिदधाति तद्वचनमित्युक्ते लक्षणाङ्गीकार दिदोषलेशस्याप्यभावात् । एवं श्रीरामरूपे नारायणे क्रोधाभिधायकस्य "कालाग्निसदृशः क्रोधे" इति वचनस्य यथा तस्मिन्नभिनयरूपक्रोधाभिधायकत्वं, तथा शिवे क्रौर्याभिधायकस्य "रुद्रो वै क्रूर" इति श्रुतिवचनादेर्नटनरूपक्रौर्याभिधायकत्वमेव । एवं शिवे बृहदारण्योक्तक्षत्रियत्वमपि नटेनेव शिवेन स्वेच्छयाङ्गीकृतमेव । एवं यथा श्रीकृष्णरूपो नारायणः कैलासे चिरकालं तपसा शिवमाराध्य तत्प्रसादात्पुत्रं लब्धवानित्यभिधायकहरिवंशादिवचनानामिदम्पर्येण नारायणस्येश्वरत्वाभिधायकवचनैर्बाधितानां शिवोपासने रुच्युत्पादनाय श्रीकृष्णरूपो नारायणः शिवोपासनं कृतवानिति तस्मिन्नभिनयरूपोपासकत्वपरत्वम् ; तथा—रामतापिनीगोपालतापिनीनृसिंहतापिनीसुबालोपनिषत्सु पाद्मपुराणोमासंहितागस्त्यसंहितादौ चान्येषा स्वस्य च मुक्तिसम्पादनाय शिवः श्रीरामगोपालनृसिंहनारायणोपासनानि कृतवानित्यभिधायकानां श्रीरामगोपालनृसिंहनारायणोपासनार्थवादवचनानामैदम्पर्येण शिवस्येश्वरत्वबोधकश्रुतिलिङ्गवाक्योपोद्बलितैरैदम्पर्येण तस्य नित्यमुक्तत्वमुक्तिप्रदत्वाभिधायकवचनैर्बाधितानां नित्यमुक्तोऽपि शिवः श्रीरामाद्युपासनेषु रुच्युत्पादनाय श्रीरामाद्युपासनानि कृतवानिति तस्मिन्नभिनयरूपोपासकत्वपरत्वमेव । एवं उपासकत्वमिव सुबालोपनिषदि "तमात्मानमुपासीत" इति नारायणोपासनाविध्यर्थवादेषु "यो रुद्रो यो नाड्या" मित्यादिवाक्येषु दर्शितं शिवस्य नियम्यत्वादिकमपि नारायणोपासने रुच्युत्पादनायाभिनयरूपमेव । एवं हरिशब्दस्य मृत्यावपि रूढत्वेन हरिं हरन्तमिति तैत्तिरीयमृत्युसूक्तवाक्यगतहरिशब्दस्य मृत्युपरत्वं

विष्णुपरत्वं वेति संशये "मा चिदो मृत्यो मा? वधी" रित्यादिमृत्युपरवाक्य-शेषानुसारेण मृत्युपरत्वमेव । व्याख्यातञ्च वेदभाष्ये तन्मृत्युसूक्तं मृत्युपरतयैव । अतोऽर्थवादवाक्यानामेषामैदम्पर्येण शिवस्येश्वरत्वबोधकश्रुतिलिङ्गवाक्या-विरोधस्यावश्यकत्वं सिद्धमेव । एवञ्च शिवे जीवत्वभ्रमजनकानामुदाहृत-श्रुतिपुराणादिवचनानां नठ इव शिवेऽभिनयरूपजीवधर्माभिधायकत्वाङ्गीकारे तेषु वचनेषु लक्षणादिदोषप्रसक्त्यभावेऽपि तेषां च नाना शिवे वास्तवजीवभावपरत्वमङ्गीकृत्य षड्विधैरपि स्वार्थतात्पर्यलिङ्गैः शिवस्येश्वरत्व-बोधकश्रुतिवचनानामन्यथानयनमनिर्मोढचक्षुतमेव ॥

किञ्चेन्द्रादीनां जीवत्वं मुख्यमीश्वरत्वं गौणमिति सिद्धान्तबलादेव तदिन्द्रादिषु जीवत्वाभिधायकवचनानां प्राबल्यस्येश्वरत्वाभिधायकवचनानां दौर्बल्यस्य चावगम्यमानत्वेन तथा शिवे जीवत्वप्रत्यायकवचनानां दौर्बल्यस्येश्वरत्वबोधकवचनानां प्राबल्यस्य च दर्शितत्वेन च इन्द्रादीनां शिवस्य च दृष्टान्तदार्ष्टान्तिकभावकल्पनमयुक्तमेवेतीन्द्रादिदृष्टान्तेन शिवस्य जीवत्वाभिधानं भ्रान्तप्रलपितमेव ।

न च शिवेऽभिहितेश्वरत्वस्य विष्णौ पर्यवसानाङ्गीकारेण दुर्बलैरपि वचनैश्शिवे जीवत्वं सिद्ध्यतीति वाच्यम् । तस्यान्योन्याश्रयग्रस्तत्वात् । शिवेऽभिहितेश्वरत्वस्यान्यत्र पर्यवसाने सिद्धे शिवस्य जीवत्वसिद्धिः, शिवस्य जीवत्वे सिद्धे ईश्वरताया अन्यत्र पर्यवसानसिद्धिरिति । विष्णोरप्यस्य दोषस्य समानत्वाच्च ।

न च शिवे जीवत्वप्रत्यायकवचनैस्तस्मिन् जीवत्वे निश्चिते तेन बाधितं सत् पश्चात्तस्मिन्नभिहितमीश्वरत्वमन्यत्रैव पर्यवस्यतीति, वाच्यम् । तत्र प्रबलप्रमाणावगतस्य बाधकतायाः दुर्बलप्रमाणावगतस्य बाध्यतायाश्च सिद्धत्वेन प्रमाणगतप्राबल्यदौर्बल्यावधारणात् प्राक् पौर्वापर्यमात्रेण बाध्यबाधकताभावावगमाभावेन, अत एवादौ प्रमाणविचारस्यावश्यकत्वेन शिवस्येश्वरत्वबोधकप्रमाणानां प्रबलतायाः जीवत्वप्रत्यायकप्रमाणान-दुर्बलतायाश्च प्रदर्शितत्वेन च शिवे पश्चादवगतेनापीश्वरत्वेन प्रथममव-गताया अप्यनीश्वरताया एव बाध्यत्वस्य युक्तत्वात् । "यदाहवनीये जुहोतीति

यत्तदाहवनीय" इति प्रथमं जातस्यापि निर्णयस्य "पदे जुहोति" इत्यनेन बाध्यत्वाङ्गीकारस्य सुप्रसिद्धत्वात्। शिवे जीवत्वप्रतीतिरेव प्रथमं भवतीति नियमाभावात्, विष्णावप्यस्य दोषस्य समानत्वाच्च। अतोऽस्मिन्नथर्वशिरसि शिवस्य सर्वकारणत्वसर्वान्तर्यामित्वसर्वात्मत्वसर्वोपास्यत्वमुक्तिप्रदत्वादिकं तात्पर्येणोक्तमिति सिद्धमेव।

अथर्वशिरसो भावाश्शिव एवेति हीरितः।
तेन प्रीतस्सदा भूयाद्रामरूपश्शिवः परः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वाधिकसरस्वती-
चरणशिष्यश्रीमद् योगेन्द्रसरस्वतीकृतिषु हरिहरा-
द्वैतभूषणे हरपारम्यनिरूपणं नाम
द्वितीयो भागः॥

## ॥ अथ तृतीयो भागः ॥

तथा च विष्णुशिवयोरुभयोरपि सर्वेश्वरत्वसर्वान्तर्यामित्वादिविशिष्टचिन्मचैतन्यरूपेणाभेदोऽवश्यमभ्युपगन्तव्यः । अन्यथा महोपनिषदि "एको ह वै नारायण आसी"दित्यत्रत्यस्य सृष्टेः प्राक् नारायणे एकत्वाभिधायकैकशब्दस्य, तत्रैव "स एकाकी न रमेत" इत्यत्रत्यैकाकिशब्दस्य, सुबालोपनिषदि "नैवेह किंचनाग्र आसीदमूलमनाधारा इमाः प्रजाः प्रजायन्ते दिव्यो देव एको नारायण" इत्यत्रत्यस्य तथाविधैकशब्दस्य, तथाथर्वशिरसि "अहमेकः प्रथममास" मित्यत्रत्यस्य सृष्टेः प्राक् शिवगतैकत्वाभिधायकैकशब्दस्य, श्वेताश्वतरोपनिषदि—

"यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः" ।

इति सृष्टेः प्राक् केवलशिवस्यैवावस्थानाभिधायकवाक्यस्य चोपरोधापत्तेः । महोपनिषदादिषह्वीषूपनिषत्सु नारायणे सकलजगदुदयस्थितिलयहेतुत्वजगदात्मत्वजगदन्तर्यामित्वजगदीश्वरत्वजगदुपास्यत्वमुक्त्यादिसकलफलप्रदत्वाद्यभिधायकवचनानामथर्वशिरआदिषु बह्वीषूपनिषत्सु शिवे सकलजगदुदयस्थितिलयहेतुत्वजगदात्मत्वजगदन्तर्यामित्वजगदीश्वरत्वजगदुपास्यत्वमुक्त्यादिसकलफलप्रदत्वाद्यभिधायकवचनानाञ्च परस्परविरोधेन स्वार्थबाधापत्तेश्च । उभयोस्सर्वकारणत्वसर्वान्तर्यामित्वादेरसम्भवात् । विष्णुशिवयोरुभयोरपि जगत्कारणत्वादेरपरिहार्यत्वस्य दर्शितत्वात्, सर्वेश्वरनानात्वापत्तेश्च ।

ननु महोपनिषदादौ प्रतिपाद्यपरमात्मनो विष्णुत्वनिश्चायकश्रुतिलिङ्गानां नारायणादिशब्दानां शिवपरत्वे वा अथर्वशिरआदौ प्रतिपाद्यपरमात्मन शिवत्वनिश्चायकश्रुतिलिङ्गादीनां रुद्रादिशब्दादीनां नारायणपरत्वे वाङ्गीकृते विष्णुशिवयोर्भेदकल्पनस्य गौरवदोषो न प्रसज्यत एवेति' चेन्न तथात्वे महोपनिषदि तैत्तिरीयोपनिषदि नारायणोपनिषद्द्वये ब्रह्मतापिन्य सुबालोपनिषदादिषूपलभ्यमानानां नारायणाच्युतानन्तहरिविष्णुविश्वरूपादीन शतादभ्यधिकानां नारायणाभिधानश्रुतिरूपाणां वा अथर्वशिरस्यथर्वशिखाय

तैत्तिरीये कैवल्ये शतरुद्रीये श्वेताश्वतरादिषूपलभ्यमानानां रुद्रेशानमहेश्वरमहादेवशम्भुविश्वेश्वरहरशिवरुद्रादीनां शतादप्यधिकानां शिवाभिधानश्रुतिरूपाणां वाभिधानश्रुतिलङ्घनाङ्गीकारस्यायुक्तत्वात् । सुबालोपनिषदि बहूनामनन्तशब्दानां बहूनां नारायणशब्दानां विष्णुशब्दद्वयस्य च विस्पष्टत्वात् ।

"अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायत" इत्यादिनारायणोपनिषदि बहूनां नारायणशब्दानां विष्णुशब्दस्यैकस्य च व्यक्तत्वात् ।

"अथ पुरुषो ह वै नारायणोऽकामयत प्रजास्सृजेयेति नारायणात्प्राणो जायते मनस्सर्वेन्द्रियाणि च" इत्यादिनारायणोपनिषद्यपि बहूनां नारायणशब्दानां विष्णुशब्दद्वयस्य देवकीसुतशब्दस्यैकस्य मधुसूदनशब्दस्य च व्यक्तत्वात् । अथर्वशिरसि रुद्रशब्दानां बहूनामीशानशब्दत्रयस्य महेश्वरशब्दद्वयस्य महादेवशब्दद्वयस्य च व्यक्तत्वात् । न हि विष्णुशिवयोरभेदाङ्गीकारापेक्षया शतादधिकानामभिधानश्रुतीनां श्रुतित्वभङ्गाङ्गीकार एव युक्त इति पशुसमानपामरेणापि शङ्कितुं शक्यम् । शतादप्यधिकानां पदानां स्वारस्यानुसारेणाभेदरूपधर्मकल्पनस्यायुक्तत्वे "निषादस्थपतिं याजये"दित्यत्र निषादस्थपतिमित्येकपदस्वारस्यानुसारेण स्थपतिरूपनिषादस्य विद्यारूपाभिरूपधर्मद्वयकल्पनं निषादस्य विद्यादिनिषेधकशास्त्रसङ्कोचकल्पनश्चेति एतत्त्रितयकल्पनस्य दत्तजलाञ्जलित्वापत्तेः । विष्णुशिवयोरनीश्वरत्वप्रत्यायकवचनानामन्यथा नयनं तयोरीश्वरत्वाभिधायकप्रबलवचनजातानुसारादिति प्रागेव दर्शितत्वात् ।

किञ्च ब्रह्ममीमांसायां "अन्तस्तद्धर्मोपदेशा" दित्यधिकरणे उदाहृतच्छान्दोग्यश्रुत्या आदित्ये अक्षिणि च श्रूयमाणहिरण्मयपुरुषयोरीदितिनामकयोरीश्वरत्वनिर्धारकलिङ्गचतुष्टयानुसारेण तयोरभेदकल्पनस्यायुक्तत्वापत्त्या ईश्वरनानात्वापत्त्या तयोरुभयोरपीश्वरत्वनिर्धारणस्यायुक्तत्वापत्त्या तदधिकरणोच्छेदापत्तिः । अभिधानश्रुतिमतानुसारेण विष्णुशिवयोरभेदकल्पनस्यायुक्तत्वे लिङ्गत्वेन स्वपरादूर्ध्याकृत्वेन च दुर्बलस्य लिङ्ग-

चतुष्टयस्यानुकारेण तद्धिरण्मयपुरुषयोरभेदकल्पने उक्तनायाः कैमुतिकन्यायेन न्यायसिद्धत्वात् । तस्माद्बिम्बचैतन्यरूपेण विष्णुशिवयोरभेदोऽनिच्छद्भिरप्यङ्गीकर्तव्यत्वेन सिद्धः ।

अपि च महोपनिषदि "शाश्वतं शिवमच्युत"मित्यत्र शिवाच्युतशब्दाभ्यामेकस्यैव परमात्मनोऽभिधानेन विष्णुशिवयोरभेदास्सिद्ध एव ।

किञ्च श्वेताश्वतरोपनिषदि प्रथमाध्याये "व्यक्ताव्यक्तं भरते विश्वमीशः" इति तदुपनिषत्प्रतिपाद्यपरमात्मनीशशब्दप्रयोगेणेशशब्दस्य शिवे रूढत्वेन एतत्समनन्तरमन्त्रे "अनन्तश्चात्मा विश्वरूपो ह्यकर्ते"त्यत्र तत्परमात्मन्यनन्तशब्दविश्वरूपशब्दयोः प्रयोगेण "अनन्तो नागराड्विष्णु"रित्यमरकोशेऽनन्तशब्दस्य विष्णौ रूढत्वाभिधानेन "विष्वक्सेनो विश्वरूपो मुरारि"रिति हलायुधनिघण्टौ विश्वरूपशब्दस्य विष्णौ रूढत्वाभिधानेन तत्समनन्तरमन्त्रे "क्षरं प्रधानममृताक्षरं हरः" इति तत्परमात्मनि हरशब्दप्रयोगेण हरशब्दस्य शिवे रूढत्वेन चात्र विष्णुशिवयोरभेदस्सिद्ध एव । शिवे रूढेशहरशब्दयोर्विष्णौ रूढानन्तविश्वरूपशब्दयोश्चैकपरमात्माभिधायकतया विस्पष्टत्वात् । अत्रत्येशशब्दहरशब्दयोः परमात्मरूपशिवे रूढत्वं हरिहरभेदधिक्कारे सम्यक् प्रदर्शितम् । तत्रैव पञ्चमाध्याये—

"द्वे अक्षरे ब्रह्मपरे त्वनन्ते विद्याविद्ये निहिते यत्र गूढे" ।

इति मन्त्रगतानन्तशब्देन, तदनन्तरं तस्मिन्नेवाध्याये,

"भूयः सृष्ट्वा पतयस्तथेशस्सर्वाधिपत्यं कुरुते महात्मा" ।

इति मन्त्रगतेशशब्देन चैक एव परमात्माभिहित इत्यनेन च सिद्ध एव विष्णुशिवयोरभेदः ।

तथा षष्ठाध्याये—

"तं विश्वरूपं भवभूतमीड्यं देवं स्वचित्तस्थमुपास्य पूर्वम्" ।

इति मन्त्रे विश्वरूपमिति शब्दोक्तस्य परमात्मरूपविष्णोर्भवभूत- मित्यनेन शिवरूपं प्राप्तमित्यर्थकेन शिवरूपप्राप्त्यभिधानात् विस्पष्ट एव विष्णुशिवयोरभेदः । एवमस्मिन्नेव षष्ठाध्याये—

"एको हंसो भुवनस्यास्य मध्ये स एवाग्निस्सलिले सन्निविष्टः ।
तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" ।

इति मन्त्रे विष्णुशिवयोरुभयो रूढेन हंसशब्देन परमात्माभिधाना- त्सिद्ध एव तयोरभेदः । हंसशब्दस्य विष्णौ शिवे च रूढत्वं

"हंसोऽर्केऽश्वे हरे विष्णौ रवौ नीले च भूभुजि ।
जीवे श्वेतवृषे भिक्षौ"

इति यादवकोशवचनेन सिद्धमेव । अस्मिन्मन्त्रे हंसशब्देनोपस्थि- तार्कादीनां हरविष्णुव्यतिरिक्तानां बिम्बैचनन्यरूपपरमात्मत्वासम्भवेनार्कादि- रूपेण तेषामभेदोऽपि न सम्भवत्येव । एवञ्चास्यां श्वेताश्वतरोपनिषदि विष्णुशिवयोरभेदस्य बहुधाभ्यस्तत्वेनास्मिन्नभेदेऽस्या उपनिषदस्तात्पर्यं सिद्धमेव । अभ्यासमात्रस्य तात्पर्यग्राहकताया "आनन्दमयोऽभ्यासा" दित्यधिकरणादौ सुप्रसिद्धत्वात् ।

अपि च गर्भोपनिषदि—

"यदि योन्याः प्रमुञ्चामि तं प्रपद्ये महेश्वरम् ।
अशुभक्षयकर्तारं फलमुक्तिप्रदायिनम् ॥

यदि योन्याः प्रमुञ्चामि तं प्रपद्ये भगवन्तं नारायणं देवमशुभ क्षयकर्तारं फलमुक्तिप्रदायिनं" इति सन्दर्भे शिवस्य सर्वेश्वरत्वाभि- धायिकया महेश्वरमित्यभिधानश्रुत्या नारायणस्य सर्वेश्वरत्वसमर्थनसमर्थे- भगवन्तमित्यनेनावगतैश्वर्यस्य सर्वेश्वरत्वलिङ्गेन तयोस्समानतयैव सर्वेश्वरत्वावगमेन तथात्र तयोः समानतयैव सकलपापक्षयकर्तृत्वसत्फलफलप्रदत्वमुक्तिप्रदत्वाभि धानेन सर्वेश्वरनानात्वासम्भवेन च विष्णुशिवयोरभेदस्सिद्ध एव । भगवन्तमित्यस्य समग्रैश्वर्यवत्त्वरूपसमग्रवीर्यवत्त्वरूपसमग्रयशोवत्त्वरूपसमग्र- श्रीमत्त्वरूपसमग्रज्ञानवत्त्वरूपसमग्रवैराग्यवत्त्वरूपषट्सर्वेश्वरत्वलिङ्गाभिधायक- तायास्सिद्धत्वात् ।

"ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥"

इति वचनात् । किञ्च ब्रह्मोपनिषदि "तुरीयमक्षरं सा आदित्यो विष्णुरीश्वरश्च" इति विष्णुशब्देश्वरशब्दाभ्यां तदुपनिषत्प्रतिपाद्यतुरीयपरतत्त्वस्याभिधानेन विष्णुशिवयोरभेदः सिद्ध एव । अत्रादित्यशब्दस्य सूर्योऽर्थो न ग्राह्यः । तद्रूपस्यादित्यस्य विश्वनियन्तृरूपसर्वेश्वरत्वासम्भवात् ।

अपि च मैत्रायणनाम्न्युपनिषदि द्वितीयप्रपाठके चतुर्थखण्डे "अनन्तोऽक्षय्यः स्थिरः शाश्वतोऽजस्रस्स्वतन्त्रः स्वे महिम्नि तिष्ठत्यनेनेदं शरीरं चेतनवत्प्रतिष्ठापितं प्रचोदयिता चैषोऽप्यसौ" इति सन्दर्भेऽनन्तशब्देनाभिहितविष्णोः अक्षयत्वस्य स्थिरत्वस्य शाश्वतत्वस्याजस्रत्वस्य स्वतन्त्रत्वस्य स्वमहिम्न्यवस्थातृत्वस्य चेतनत्वेन सर्वशरीरप्रतिष्ठापयितृत्वस्य सर्वप्रचोदयितृत्वस्य चाभिधानेन, तत्रैव षष्ठप्रपाठके सप्तमखण्डे गायत्रीव्याख्यानानन्तरं "अथ भर्ग इति यो ह वा अस्मिन्नादित्ये निहितस्तारकेऽक्षिणि चैष भर्गाख्यो भाभिर्गतिरस्य हि" इति "भर्गो जयतीति चैष भर्ग इति रुद्र" इति गायत्र्यास्थ भर्ग इति पदव्याख्यानरूपे प्रतिपाद्ये "भर्गो रुद्र" इत्यभिधानेन चात्र विष्णुशिवयोरभेदः सिद्ध एव । सर्वप्रचोदयितृनानात्वासम्भवात् । अत्र द्वितीयप्रपाठके प्रचोदयिता चैषोऽस्यानन्तशब्दोक्त इति विष्णोः सर्वप्रचोदयितृत्वाभिधानात् । षष्ठप्रपाठके भर्ग इति रुद्र इति अस्य सर्वप्रचोदयितृतया गायत्रीप्रतिपाद्यभर्गो रुद्र इत्यर्थावगमेन तस्यापि शिवे सर्वप्रचोदयितृत्वाभिधानपर्यवसायित्वात् । एवञ्च विष्णुशिवयोरुभयोरपि सर्वान्तर्यामित्वरूपसर्वेश्वरत्वं श्रुतिभिरभिहितेऽर्थात्सिद्धमेव तयोर्गायत्रीप्रतिपाद्यत्वमनयाप्युपनिषदा दर्शितं भवति ।

एतेन गायत्रीप्रतिपाद्यत्वं शिवस्यैव न तु विष्णोरिति विष्णोरेव न तु शिवस्येति च केषाञ्चिद्वैष्णवानां पाषण्डिनां मनोरथतरुरशनिनेव भग्नः ।

किञ्च तैत्तिरीयोपनिषदि तयोरभेदः स्फुटं दर्शित । तथा हि—

"अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्।
शुक्रेण ज्योतींषि समनुप्रविष्टः प्रजापतिश्चरति गर्भे अन्तः"॥

इति सन्दर्भे महतो महीयान् निरवधिकमहान् परमेश्वरः । शुक्रेण शुद्धसत्त्वोपाधिकचैतन्यरूपेण ज्योतींषि श्रीमूर्तिरूपज्योतींषि समनुप्रविष्टः । अपारे अम्भसि भुवनस्य चतुर्दशभुवनानां मध्ये नाकस्य पृष्ठे च स्थितवान्प्रजापतिः सकलप्रजापालकस्सन् गर्भेऽन्तश्चरति सर्वेषामन्तरात्मरूपेण सर्वनियामको भवतीत्यर्थकेऽत्र यद्यपि भुवनस्य मध्य इति भुवनत्वेन चतुर्दशभुवनानां ग्रहणात् नाकपृष्ठस्यापि ग्रहणं सिद्धमेव । तथापि परमात्मनो नाकपृष्ठे नित्य सन्निहितत्वद्योतनार्थं तद्ग्रहणात् । एवञ्चात्र "अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठ" इति पदानां सर्वेषां व्याख्यानान्तर इव विना कारणं रूढिपरित्यागदोषो बहुलक्षणाश्रयदोषश्च न प्रसज्यते । तथा च दैनन्दिनप्रलये एकार्णवीभूतमहाजले विष्णुर्वटपत्रशायी भवतीति सकलपुराणेतिहासादिषु सुप्रसिद्धत्वात् एतदुपनिषत्प्रतिपाद्यपरमात्मनो विष्णुत्वं सिद्धम् ।

एवमस्मिन्नेवानुवाके "यमन्तस्समुद्रे कवयो वयन्ति" इत्यत्र यं परमात्मानं कवयो मेधाविनस्समुद्रेऽन्तस्समुद्रमध्ये वयन्ति सन्तन्वन्ति ध्यायन्तीत्यर्थके समुद्रशब्दस्य रूढिपरित्यागदोषं विना परमात्मनस्समुद्रमध्यवर्तितया ध्येयत्वप्रतिपादनेन च सोऽर्थस्सिद्धः । क्षीरसमुद्रवर्तितया विष्णोर्ध्येयत्वस्य श्रुतिषु सकलपुराणेतिहासादिषु च सुप्रसिद्धत्वात् क्षीरसमुद्रस्यैव समुद्रत्वेनाभिधानसम्भवात् ।

एवमस्मिन्नेवानुवाके—

"योऽन्तमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात् ।"

इति सन्दर्भेऽनन्तरूपमित्यत्रत्यानन्तेति विष्ण्वभिधायकश्रुत्यैतदुपनिषत्प्रतिपाद्यपरमात्मनो विष्णुत्वं सिद्धमेव ।

एवं "यश्छन्दसामृषभो विश्वरूपश्छन्दोभ्यश्छन्दांस्याविवेश । सतां शिक्य" इत्यत्र विश्वरूप इति विष्ण्वभिधानश्रुत्या तत्परमात्मनो विष्णुत्वं सिद्धमेव। अत्र विश्वरूपशब्दस्य योगरूढत्वे सम्भवति केवलयौगिकत्वाश्रयणस्यान्याय्यत्वात्। रूढ्यर्थस्यापि प्रकरणाविरुद्धत्वात्। प्रकरणापेक्षया विश्वरूप इति विष्ण्वभिधानश्रुतेः प्रबलतमत्वाच्च। एवं सहस्रशीर्षं देवमित्यनुवाके नारायणहर्यच्युतानन्तशब्दरूपाभिरेकादशाभिर्नारायणाभिधानश्रुतिभिस्समुद्रेन्तामित्यनेनावगताविष्णुत्वालिङ्गेन चैतदुपनिषत्प्रतिपाद्यपरमात्मनो विष्णुत्वं सिद्धमेव। एतदनुवाके नारायणस्य न परमात्मत्वं प्रतिपाद्यते किन्तु शिवोपासकत्वमेवेत्यादिकुशङ्कास्सर्वास्समूलमुन्मूलिता हरिहरभेदाधिकारे।

एवमस्यामेवोपनिषदि—

"तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्"।

इत्यत्र ईशमिति शिवाभिधानश्रुत्या एतदुपनिषत्प्रतिपाद्यपरमात्मनश्शिवत्वं सिध्यति।

तथा—

"यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः"

इत्यत्र रुद्र इति शिवाभिधानश्रुत्या तत्परमात्मनश्शिवत्वमभिहितम्।

तथा—

"तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः"।

इत्यत्र महेश्वर इति शिवाभिधानश्रुत्या तत्परमात्मनश्शिवत्वं सिद्धम्।

तथा—

"सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु पुरुषो वै रुद्रः"

इत्यत्र,

"सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु"

इत्यत्र,

"कद्रुद्राय प्रचेतसे सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु"

इत्यत्र चाष्टमी रुद्रशब्दरूपाभिःशिवाभिधानश्रुतिभिः, "अम्बिकापतय उमापतय" इत्यत्र अम्बिकापत्युमापतिशब्दरूपशिवाभिधानश्रुतिद्वयेन च तत्परमात्मनः शिवत्वं सिद्धमेव। एवं "ईशस्सर्वस्य जगत" इत्यत्र ईश इति शिवाभिधानश्रुत्या तत्परमात्मनश्शिवत्वं सिद्धम्। एवं "वामदेवाय नमो ज्येष्ठाय नमो रुद्राय नम" इत्यत्र; "तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदया" दित्यत्र; "ईशानस्सर्वविद्यानामीश्वरस्सर्वभूताना" मित्यत्र; "ब्रह्मा शिवो मे अस्तु सदाशिवो" इत्यत्र च वामदेवायेति रुद्रायेति महादेवायेति रुद्रेतीशान इतीश्वर इति शिव इति सदाशिवेत्यत्र शिवेति चेत्यष्टभिश्शिवाभिधानश्रुतिभिरेतदुपनिषत्प्रतिपाद्यस्य शिवत्वमप्रकम्पितं सिद्धम्। एवञ्चात्र विष्णुशिवयोर्बिम्बचैतन्यात्मकसर्वेश्वररूपेणाभेदोऽवश्यमभ्युपगन्तव्योऽङ्गीकर्तव्यः। अन्यथा परमात्मनि विष्णुत्वबोधकबहुश्रुतिलिङ्गानां वा शिवत्वबोधकबहुश्रुतिलिङ्गानां वोपरोधापत्तेः। बहुश्रुतिलिङ्गानां बाधाङ्गीकारापेक्षया तयोरभेदाङ्गीकारस्यैव युक्ततायाः निषादस्थपत्यधिकरणस्य "अन्तस्तद्धर्मोपदेशा" दित्यधिकरणस्य चोदाहरणपूर्वकं प्रदर्शितत्वात्।

किञ्च परमात्मनि विष्णुत्वशिवत्वबोधकप्रमाणयोरस्यामुपनिषद्यभ्यस्तत्वेनाभ्यासस्य तात्पर्यग्राहकत्वेनास्या उपनिषदस्तदभिधाने तात्पर्यस्य सिद्धत्वेन च श्रुतितात्पर्यविषयभूतस्यार्थस्य तयोरभेदाङ्गीकारेण रक्षणे सम्भवत्यपि तदपहाय बाधरूपपक्षाश्रयणस्य पशुसदृशपामराणामप्ययुक्तत्वात्।

एतेनैतदुपनिषत् शिवपरैव न विष्णुपरेति, विष्णुपरैव न शिवपरेति च मतद्वयस्य दत्तजलाञ्जलित्वं सिद्धमेव। अपि चात्र "शाश्वतं शिवमच्युत" मित्यत्र शिवाच्युतशब्दाभ्यामेकस्यैव परमात्मनोऽभिधानेन व्यक्त एव विष्णुशिवयोरभेदः।

किञ्चास्यामेवोपनिषदि—

"ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्।
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः"॥

इत्यत्र शिवं विष्णौ च रूढविरूपाक्षविश्वरूपशब्दाभ्यामेकस्यैव परमात्मनोऽभिधानेन तयोरभेदो विस्पष्ट एव। एवञ्चास्यामुपनिषदि विष्णुशिवयोरभेदप्रदर्शनस्याभ्यस्तत्वेनाभ्यासस्य तात्पर्यग्राहकत्वेन च तदभेदेऽस्या उपनिषदस्तात्पर्यं सिद्धमेव।

अपि च कठवल्ल्युपनिषदि तयोरभेदस्सिद्ध एव।

तत्र—

"सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्"

इत्यत्र सर्वैर्मुमुक्षुभिः प्राप्यं परमं पदं विष्ण्वभिन्नमित्येवार्थः। विष्णोरित्यत्र राहोश्शिर इत्यत्रेवाभेदसम्बन्धस्यैव षष्ठ्यर्थत्वसम्भवात्। तस्यैव लाघवानुगृहीतत्वात्।

नारायणोपनिषद्येतत्समानप्रकरणे—

"रुद्रं स सारथिं कृत्वा, मनःप्रग्रहवान्नरः।
प्रयाति परमं पारं विष्ण्वाख्यं पदमव्ययम्॥"

इत्यत्र विष्ण्वाख्यमित्यनेन सर्वैः प्राप्यं परमं स्थानं विष्णुरेवेति कण्ठरवेणाभिधानाच्च। किञ्च तद्विष्णोरित्यत्रत्यविष्णुशब्दस्य व्याप्त्यर्थकविषॢधातुप्रकृतिकत्वेन सरूढ्यर्थरूपविष्णौ यौगिकया वृत्त्या सर्वव्यापकत्वाभिधायकत्वेन सर्वव्यापकत्वस्य परमात्मत्वलिङ्गत्वेन विष्णुशब्देनैव विष्णोः परमात्मतापासिद्धत्वेन परमात्मनोऽन्यस्य प्राप्यत्वासम्भवेन च प्राप्यपरमपदे विष्ण्वभेदस्यावश्यकत्वात्। उक्तश्चायं यौगिकार्थो विष्णुशब्दस्य नृसिंहपूर्वतापिन्याम्—

"अथ कस्मादुच्यते महाविष्णुरिति यस्मात्स्वमहिम्ना सर्वान् लोकान् व्याप्नोति स्नेहो यथा पललपिण्डं शान्तमूलमोतप्रोतमनुप्राप्तम्व्यतिषिक्तो व्याप्य व्यापयते तस्मादुच्यते महाविष्णुरिति" इति। अत एव भगवत्पादैः कठवल्लीभाष्ये तद्विष्णोः परमं पदमित्यस्य व्याख्यानावसरेऽभिहितम्; "विष्णोर्व्यापनशीलस्य; ब्रह्मणो वासुदेवाख्यस्य; परमं प्रकृष्टं, पदं स्थानम्; सत्त्वमित्येत" दिति।

एवमस्यामेवोपनिषदि—

" अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत् ।
अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते " ॥

इति सन्दर्भेऽनन्तमिति विष्णवभिधानश्रुत्या तत्परमात्मनो विष्णुत्वं सिद्धमेव । यदिति नपुंसकलिङ्गयच्छब्देनानूदितार्थस्य परामर्शकेन निचाय्य तमित्यत्रत्येन तमिति पुल्लिङ्गतच्छब्देन विशेषितानन्तशब्दस्य पुल्लिङ्गतायाःसिद्धत्वात् । न च यौगिकपदसमभिव्याहारमात्रेणानन्तमित्यस्य केवलयौगिकत्वं शङ्कितुं शक्यम् । "शब्दादेव प्रमित" इत्यधिकरणे उदाहृत "ईशानो भूतभव्यस्ये" ति वाक्ये कण्ठरवेणैवेशानशब्दस्य यौगिकत्वाभिधायक-वाक्ये सत्यपि तदीशानशब्दस्य योगरूढत्वाङ्गीकारस्य दृष्टत्वेनात्राप्य-नन्तशब्दस्य स्थानरूपेण यौगिकसमभिव्याहारेण योगरूढताया युक्त-त्वात् । ईशानो भूतभव्यस्येत्यत्र यौगिकार्थाभिधायकवाक्येन श्रुतिबाधा-भावेऽत्र स्थानरूपसमभिव्याहारेण श्रुतिबाधाया अप्रसक्तत्वात् । वाक्या-पेक्षया स्थानस्य दुर्बलत्वात् । तथा च सिद्धमेव तदुपनिषत्प्रति-पाद्यपरमात्मनो विष्णुत्वम् ।

एवमस्यामेवोपनिषदि "ईशानं भूतभव्यस्य न ततो विजुगुप्सत" इत्यत्रेशानमिति शिवाभिधानश्रुत्या एतदुपनिषत्प्रतिपाद्यपरमात्मनश्शिवत्वं सिद्धमेव । एवमस्यामेवोपनिषदि—

" अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य " ॥ इत्यत्र च

ईशान इति शिवाभिधानश्रुत्या तत्परमात्मनश्शिवत्वं सिद्धमेव । अत्रत्येशानशब्दः "शब्दादेव प्रमितः" इत्यधिकरणे योगरूढ इत्यङ्गी-कारस्यानुपदं दर्शितत्वात् । तथा चात्र विष्णौ रूढविष्ण्वनन्तश-ब्दाभ्यां शिवे रूढेशानशब्देश्च एकस्यैव परमात्मनोऽभिधानेनास्यामुपनिषदि सिद्ध एव तयोरभेदः । अत्रत्यविष्ण्वीशानशब्दयो रूढ्यङ्गीकारपूर्वकं

विष्णुशिवयोरीश्वरत्वमङ्गीकृतवतां वैदिकमार्गप्रवर्तकानां भगवत्पादाना- मयमभेदोऽभिमत एवेत्येतादृशस्पष्टम् । भगवत्पादैरेव श्वेताश्वतरोपनिषद्भाष्ये "देवात्मशक्तिं स्वगुणैर्निगूढा" मिति व्याख्यानेऽयमभेदः कण्ठरवेणा- भिहितः । तदिदं भाष्यम्—

"अथ वा देवस्य परमेश्वरस्य आत्मभूतां जगदुत्पत्तिस्थितिलयहे- तुभूतां ब्रह्मविष्णुशिवात्मिकां शक्तिमिति । तथा चोक्तम्—

"शक्तयो यस्य चैकस्य ब्रह्मविष्णुशिवात्मिका" इति;

"ब्रह्मविष्णुशिवा ब्रह्मन् प्रधाना ब्रह्मशक्तय" इति च;

स्वगुणैस्सत्वरजस्तमोभिः । सत्वेन विष्णु रजसा ब्रह्मा तमसा महेश्वरः । सत्वाद्युपाधिसम्बन्धात् स्वरूपेण निरुपाधिकपूर्णानन्दाद्वितीय- ब्रह्मात्मनैवानुपलभ्यमानाः परस्यैव ब्रह्मण सृष्ट्यादिकार्यं कुर्वन्तोऽवस्थाभेदमा- श्रित्य शक्तिभेदव्यवहारो न पुनस्तत्त्वभेदमाश्रित्य ।

तथा चोक्तं—

"सृष्टिस्थित्यन्तकारिणीं ब्रह्मविष्णुशिवात्मिकाम् ।
स संज्ञां याति भगवान् एक एव जनार्दनः" ॥

इति प्रथममीश्वरात्मना मायिरूपेणावतिष्ठते ब्रह्म ॥ पुनर्मूर्तिरूपेण त्रिधा व्यवतिष्ठते । तेन च रूपेण सृष्टिस्थितिनियमनानि करोति । तथा च श्रुतिः परस्य शक्तिद्वारेण नियमनादिकार्यं दर्शयति –

"लोकानीशत ईशनीभिः प्रत्यङ्जनास्तिष्ठति ।
सञ्चुकोपान्तकाले संसृज्य विश्वा भुवनानि गोपा" ॥

इति । ईशत ईशनीभिः जननीभिः परमशक्तिभिरिति विशेषात् ।

"ब्रह्मविष्णुशिवा ब्रह्मन् प्रधाना ब्रह्मशक्तयः ।
विष्णुशक्तिः परा प्रोक्ता" ॥ इति स्मृतेः ;
परमशक्तिभिरिति परदेवतानां ग्रहणम्" इति ।

अत्र भाष्ये निर्विचैतन्यरूपेण विष्णुशिवयोरैक्यं मूर्तिरूपेण भेदः उभयोः परदेवतात्वञ्च वैदिकाग्रगण्यैर्भगवत्पादैः कण्ठरवेणोक्तमिति सिद्धम् ।

किञ्च नृसिंहतापिन्यां नयोरभेदस्सिद्ध एव। तत्र पूर्वतापिन्या "उग्रं प्रथमस्थानं जानीयादि" त्यत्र "विष्णुं चतुर्थस्थानं जानीया" दित्यत्र च, उत्तरतापिन्या चतुर्थखण्डे "एष एवोग्र एष एव वीर एष एव महान् एष एव विष्णुरि" त्यत्र, तत्रैव पञ्चमखण्डे "एष एवोग्र एष हि व्याप्ततम एष एव वीर एष हि व्याप्ततम एष एव महानेष हि व्याप्ततम एष एव विष्णुरेष हि व्याप्ततम" इत्यत्र, तस्मिन्नेव खण्डे "उग्रमनुग्रं वीरमवीरं महान्तममहान्तं विष्णुमविष्णु" मित्यत्र, सप्तमखण्डे "आत्मत्वादुग्रत्वाद्वीरत्वान्महत्त्वाद्विष्णुत्वा"दित्यत्र, "उग्रोऽग्रत्वाद्वीरत्वान्महत्त्वाद्विष्णुत्वा" दित्यत्र, "अत्युग्रोऽतिवीरोऽतिमहानिति विष्णु"रित्यत्र चेत्यष्टसु स्थलेषूग्रशब्दरूपशिवाभिधानश्रुतिभिर्विष्णुशब्दरूपविष्ण्वभिधानश्रुतिभिश्चैकस्यैव नृसिंहशब्देनोक्तस्य विश्वचैतन्यरूपसर्वेश्वरस्याभिधानेन तद्विश्वचैतन्यात्मकसर्वेश्वररूपेण विष्णुशिवयोरभेदो बहुधाभिहितो भवति। अतोऽस्या उपनिषदस्तदभेदबोधने तात्पर्यं सिद्धमेव। तत्र तदभेदस्याभ्यासेन बोधितत्वात्। अभ्यासस्य तात्पर्यग्राहकतायास्सुप्रसिद्धत्वात्। "उग्रः कपर्दी श्रीकण्ठः" इत्यमरकोशवाक्येनोग्रशब्दस्य शिवे रूढत्वं सिद्धमेव। अस्यामेवोपनिषदि पूर्वतापिन्या प्रथमोपनिषदि चतुर्थखण्डे—

"ऋतं सत्यं परं ब्रह्म पुरुषं नृकेसरिविग्रहं कृष्णपिङ्गलम्।

ऊर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहितम्।
उमापतिं पशुपतिं पिनाकिं ह्यमितद्युतिं॥

ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानाम्"।

इत्यत्र सर्वेश्वरे नृसिंहरूपविष्णौ विरूपाक्षेत्यादिभिरष्टभिश्शिवाभिधानश्रुतिभिर्विरूपाक्षत्वशङ्करत्वनीललोहितत्वोमापतित्वपशुपतित्वपिनाकित्वेशानत्वेशत्वानामभिधानेन विष्णुशिवयोरभेदो दर्शितः। नृसिंहस्य विष्णुत्वमस्यामेवोपनिषदि क्षीरोदार्णवशायित्वरूपविष्णुत्वलिङ्गेनानुपसंहातविरोधिनसिद्धमिति प्रागेव दर्शितम्। भगवत्पादैरप्येतन्नृसिंहतापिनीभाष्ये एतन्मन्त्रव्याख्यानावसरे तयोर्मूर्तिरूपेणैवाभेदः स्फुटं दर्शितः। एतत्पूर्वतापिन्यामेव

द्वितीयोपनिषदि "अथ कस्मादुच्यते नृसिंहमिति यस्मात्सर्वेषां भूतानां मध्ये ना पुरुषाकारः श्रेष्ठतमश्च सिंहो वीर्यवत्तमः श्रेष्ठतमश्च तस्मान्नृसिंह आसीत्परमेश्वरो जगद्धितमेतद्रूपं यदक्षरं भवती"ति सन्दर्भे भाष्ये च दर्शितम्—

"यस्मात्सर्वेषां भूतानां मध्ये ना पुरुषाकारो वीर्यतमस्सर्वातिशायी श्रेष्ठतमश्च सिंहो वीर्यतमः श्रेष्ठतमश्चेत्युक्तार्थं तत्तश्चोभयात्मकरूपप्रदर्शनेन यद्रूपं कामयते तद्धारणे लीलयैव शक्तोऽयमिति दर्शयति। यस्मादेवं तस्मान्नृसिंहः परमेश्वर आसीदित्यन्वय- अन्यथा वैयधिकरण्यापत्तेः। तस्मान्नृसिंहः परमेश्वरस्त्रिनेत्रो नीलकण्ठः पिनाकीति सिद्धम्। ऋतं सत्यमिति प्राग्व्याख्यातमन्त्रवर्णोक्तं जगद्धितं जगतो हितमनिष्टनिरसनेन वै प्रसिद्धमेतद्रूपं मामुपास्यत्वेन यदुक्तमक्षरमविनाश्यं चिद्रूपं निराकारं तदेव साकारमुपासकानुग्रहाय भवतीत्यन्वयः" इति।

अत्र "तस्मान्नृसिंह आसीत्परमेश्वर" इति श्रुत्या विष्णोश्शिवरूपत्वमुक्तमित्येतदत्र भाष्यकारैः स्फुटं दर्शितम्। ऋतं सत्यमिति मन्त्रेण चोक्तमिति चोक्तम्। ऋतं सत्यमिति मन्त्रस्थोमापतिशब्दव्याख्यानभाष्ये उमापतिः "उमा गौरी तस्याः पतिः। श्रियं लक्ष्मीमिति सप्त शक्तयो वदन्त" इत्युक्तम्। उक्ताश्च सप्तशक्तयस्तृतीयोपनिषदि—

"श्रियं लक्ष्मीमौपलामम्बिकां गां षष्ठीं च यामिन्द्रसेनेत्युदाहुः"।

इति।

अस्मिन्मन्त्रे नृसिंहस्य लक्ष्म्यम्बिकोभयपतित्वप्रदर्शनेन, एतन्नृसिंहनापिन्यां तद्भाष्येण च लक्ष्मीपतित्वोमापतित्वविशिष्टं विष्णुशिवात्मकं रूपं त्रिवारमुक्तं भवतीति तयोर्मूर्तिरूपेणाभेद एतच्छ्रुतितात्पर्यविषयसिद्ध एव। तदभेदस्यात्राभ्यस्तत्वादभ्यासस्य तात्पर्यग्राहकत्वात्। अत्र यद्यद्रूपं कामयते तत्तद्धारणे लीलयैव शक्तोऽयमिति दर्शयति। यस्मादेवं तस्मान्नृसिंहः परमेश्वर आसीदिति भाष्यसन्दर्भेण विष्णोर्विष्णुशिवात्मकरूपधारण उपपत्तिरुक्ता। सालग्रामेषु शङ्करनारायणमूर्तयो

हरिहरमूर्तयश्च सुप्रसिद्धाः । मन्त्रशास्त्रे पुराणादिषु चैवंविधान्युपासनानि सुप्रसिद्धान्येव । एवं विष्णुशिवयोरुमापतित्वलक्ष्मीपतित्वविशिष्टमूर्त्य-भेदस्यापि प्रसिद्धत्वेन बिम्बचैतन्यरूपेण तयोरभेदः कैमुतिकन्यायसिद्ध एव।

अपि च स्कन्दोपनिषदि—

"शिवाय विष्णुरूपाय शिवरूपाय विष्णवे ।
शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः ॥

यथा शिवमयो विष्णुरेवं विष्णुमयश्शिवः ।
यथान्तरं न पश्यामि तथा मे स्वस्ति चायुषि ॥"

इति वैदिकैस्सन्ध्यावन्दने परिपठ्यमानमन्त्रद्वयेन विष्णुशिवयोर्बिम्ब-चैतन्यात्मकसर्वेश्वररूपेणाभेदः कण्ठरवेणाभिहितः । एवञ्चैतदभेदस्य बह्वीषूपनिषत्सु गतिसामान्यं तदभेदवचसां प्रबलमेव प्रामाण्यकारणम् । दर्शितञ्च प्रमाणानां प्रामाण्ये समानगतेः प्रबलकारणत्वमीक्षत्यधिकरणे "गतिसामान्या" दिति सूत्रे भाष्ये च ॥

किञ्च पुराणेतिहासादिष्वप्यभेदः कण्ठरवेणाभिहितः । तत्र ब्रह्माण्ड-पुराणे द्वादशोत्तरशततमेऽध्याये—

"मद्भक्तश्शङ्करद्वेषी मद्द्वेषी शङ्करप्रियः ।
तावुभौ नरकं यातौ यावदाभूतसंप्लवम् ॥

सोऽहं पाता विष्णुरूपी ब्रह्मरूपी तु विश्वसृक् ।
रुद्ररूपी तु संहर्ता त्वहमेवन्त्रिधा मतः" ॥ इति

तत्रैवाष्टादशोत्तरशततमेऽध्याये—

"पश्यतां सर्वभूतानां प्रादुरासीज्जनार्दनः ।
एकतश्शङ्खचक्री सन् अपरत्र त्रिशूलवान् ॥

लक्ष्मीसहाय एकत्र परत्र गिरिजासख· ।
चतुर्बाहुर्द्विबाहुश्च द्विनेत्रश्च त्रिनेत्रवान् ॥

कौस्तुभेर्भूषितोऽन्यत्र फणिभिश्च विभूषितः ।
तिर्यक्पुण्ड्रोर्ध्वपुण्ड्रश्च ददृशे स जनार्दनः ॥
हरिरूपं स्तुवन्ति स्म केचिद्विप्राश्शुकादयः ।
रुद्ररूपं स्तुवन्ति स्म विश्वामित्रादिगौतमाः ॥
मिश्ररूपं स्तुवन्ति स्म ब्रह्माद्यास्सर्वदेवताः ।
तदा प्रभृति लोकेऽस्मिन्यतद्द्वयमभून्नृप ॥
केचिद्रूपं पूजयन्ति विष्णोस्तस्य महात्मनः ।
केचित्तु शिवरूपञ्च भेदो नास्ति तयोर्नृप ॥
ये भेदवाद कुर्वन्ति ते वै निरयगामिनः ।
हरिरेव हरस्साक्षाद्धर एव हरिः स्मृतः" ॥ इति ।

तत्रैवाष्टत्रिंशदुत्तरशततमेऽध्याये—

"एक एव परो देवः सृष्टिस्थित्यन्तकारणम् ।
स एको ब्रह्मणो रूपं ज्ञात्वा सृजति ताः प्रजाः ॥
स एव रक्षिता तांस्तु सोऽन्ते संहरते प्रजाः ।
इत्यविज्ञाय ये केचिन्मूढाः पण्डितमानिनः ॥
तन्मायाविग्रहदयाः कलौ भेदं प्रकुर्वते ।
शिव एव हरिस्साक्षाद्धरिरेव सदा शिवः ॥
भेदलेशस्तयोर्नास्ति सत्यं सत्यं वदाम्यहम् ।
ये कुर्वन्ति हरेः पूजां शिवपूजाकराश्च ते ॥
शिवपूजाकरा ये वै विष्णुपूजाकराश्च ते ।
यथा यथावताराणि विष्णोरमिततेजसः ॥
मत्स्यादीनि तथा नृप महादेवो न संशयः ।
भेदं मा कुरु भूपाल शिवमाधवयोस्सदा" ॥

इति दिलीपं प्रति नारदवाक्यसन्दर्भे, तत्रैव नवत्रिंशच्छततमेऽध्याये—

"युवयोर्महिमानं यः को वेत्ति पुरुषः प्रभु ।
माहात्म्यं युवयोर्देवौ युवां वेत्तु प्रभू स्वयं ॥

यं यं देवं नमस्कृत्य महान्त' प्रार्थयन्ति ये ।
नेया हि फलदातारौ तदाकारेण तौ युवाम् ॥

पूजयन्त्यम्बिका केचित्पूजयन्ति युवा परे ।
केचिद्गणेश्वरं केचिद्रविं वाभीष्टसिद्धये ॥

केचिद्दुर्गाश्च भद्राश्च केचित्कालीं यशस्विनीम् ।
तत्तद्देवमयौ भूत्वा युवां तौ भक्तवत्सलौ ॥

तत्तत्सर्वफलावाप्तिं कुर्वाते पुरुषोत्तमौ ।
अम्बराद्गलितं तोयं समुद्रं प्राप्यते यथा ॥

सर्वपूजानमस्कारौ युवामेवापिगच्छत ।
कर्माणि युष्मत्साक्षात्कृत्वा स्वरूपाण्यपि बहून्यपि ॥

नमस्करोति श्रद्धालोर्विवर्धन्ते यथाद्वय. ”

इति विष्णुगीतौ मनि सञ्जयवाक्ये च विष्णुशिवयोरभेदो मेदनिश्चयवतां नरकवासश्च सम्यगभिहित । एवं विष्णुधर्मोत्तरे द्वादशाध्याये—

“ हरिरेव स्वयं शम्भु हरिरेव प्रजापति ।
हरिरेव च ये देवा हरिस्सर्वमिदं जगत् ॥

अयं हरिरयं शम्भुरित्यभेदं करोति य ।
स एव कृतकृत्यश्च तेनेदमखिलं जितम् ॥

एवं शिवात्मकं विष्णुं तथा विष्ण्वात्मकं शिवम् ।
समर्चयति यो भक्त्या स याति परमं पदम् ” इति,

एवं ब्रह्माण्डोपपुराणे —

“ एवंविधे स्थलेऽगस्त्ये तपश्चरति वै मुनौ ।
लिङ्गार्चनपरे दिव्ये श्रीनिवासे हरे प्रिये ॥

सलिङ्गादर्चित श्रीमान् केशवार्यस्तदा शिव ।
प्रादुरासीद्द्विजेन्द्राय सुप्रीत कुम्भयोनये ॥

कुम्भयोने महाभाग तपसा तव भक्तितः ।
सुप्रीतो वरदश्चास्मि शार्ङ्गधन्वा वृषध्वजः ॥

इति तद्वचनं श्रुत्वा अगस्त्यः परभक्तिमान् ।
तुष्टाव वेदसूक्तैस्तं स्तोत्रैरद्वैतगर्भितैः ॥

विष्णुभक्तिमतां श्रेष्ठश्शिवभक्तिपरायणः ।
चिन्तयन् हृदयेऽद्वैतं पश्यन्नग्रे च तादृशम् ॥

स्तुवन्वाचा च मुदितस्तन्मयोऽवसिमनोऽभवत् ।

स्तुतिकरणानन्तरम् —

भवान्विष्णुश्च ब्रह्मा च विख्याता हि त्रिमूर्तयः ।
प्रलयावनसृष्टीनां हेतुमाहुः पुराविदः ॥

*अल्पज्ञा मादृशा लोकाः कथमस्य त्रिमूर्तिषु ।
तत्त्वपारंतरं तत्त्वेनाचक्ष्व तन्मम"* ॥

इत्यगस्त्येन पृष्टे —

"किश्चित् विहस्याह शनैरुदाराविर्णश्चविष्णुर्धृतशङ्खशूलः ।
अर्कोत्पलश्यामलमूर्तिरग्रे स्थितः प्रसन्नाननचन्द्रचूडः ॥

मुनेऽगस्त्य महाभाग माया मे वैष्णवी परा ।
सर्वानावृत्य नितरां मोहयत्यखिलं जगत् ॥

नाहं प्रकाशो लोकस्य मायायवनिकावृतः ।
न वेत्ति मम याथात्म्यं देहाहंकृतचेतनः ॥

शापदण्डाः पुरा लोकाः मुनिभिस्सप्तभिर्मुने ।
गौतमादिभिरत्युग्रकोपनैरतिदारुणैः ॥

मोहो भावेहि च पुनः पुरत्रयनिवासिनाम् ।
शास्त्राणि विविधान्यासन् कल्पितानि ममाज्ञया ॥

समस्तयानि तान्यद्धा नानासिद्धान्तवर्त्मतः ।
प्रचरन्ति वशं नीतान् पातयन्ति क्षणादधः ॥

आशापाशशतैर्बद्धाः पतन्ति नरकेऽशुचौ ।
वैदिकाचारविमुखा विमूढा ब्रह्मणः पथि ॥

तस्माददद्वैतमत्यन्तमजरं मामबुद्धयः ।
न जानन्ति जना ब्रह्मन् सर्वकारणकारणम् ॥

न वेदवादनिरता भिन्नोपासनतत्पराः ।
मायाकिञ्चित्फला लोकास्संसरन्ति ह्यनारतम् ॥

कल्पयन्ति भिदां भूयो ब्रह्मेशाच्युतमूर्तिषु ।
तयैकतरमालम्ब्य निन्दयन्त्यन्यतरं त्रिषु ॥

मूर्तिभेदेषु तेनैते यान्ति नरकायुतम् ।
ये भिदादर्शिनो मूढा निर्दग्धाग्निवाडवे शापतः ॥

यातारो निरयं नो चेन्नेक्षते शाश्वतो भिदाम् ।
याथात्म्यं वेदशास्त्राणां पुराणवचसां जनाः ॥

न विदुश्शब्दमात्रार्था भिदादृष्ट्या पतन्त्यधः ।
रहस्यं शृणु मे भूयश्शास्त्रतत्त्वार्थमव्ययम् ॥

शिवो विष्णुरिति ब्रह्मा वाच्य एकोऽहमम्बुधिः ।
मत्तस्सर्वमिदं तस्मान्न कुत्राप्यस्ति वै भिदा ॥

अहं विष्णुर्हरश्चाहमावां वेधा उभौ स च ।
गौरी श्रीरिन्दिरा गौरी ते वाणी ते च ते उभे ॥

नालीकमिव नरतासां भिदा ब्रह्मन्न विद्यते ॥

अस्माकमासामन्योन्यं भिदादर्शी विमूढधीः ।
नाक्षी. सं. हि. पापिष्ठो. नैवैत्मुच्यत. संसृतेः ॥

इति ते गुह्यमाख्यातं परमार्थस्य निर्णयम् ।
उद्धृत्य सर्वशास्त्रेभ्यो मथितं मनसा द्विज ॥"

इत्यगस्त्यं प्रति शिववचनसन्दर्भे विष्णुशिवयोरभेदस्तयोर्भेदबुद्धिमतो नरकपातश्च तात्पर्येणैवाभिहितः ॥

एवं वराहपुराणेऽगस्त्यगीतासप्तपञ्चाशेऽध्याये—

"यो श्रीरसा गिरिजा प्रोक्ता यो हरिस्स त्रिलोचनः ।
एवं सर्वेषु शास्त्रेषु पुराणेषु च पठ्यते ॥
एतस्मादन्यथा यस्तु ब्रूते शास्त्रं पृथग्विधम् ।
तथास्तिकानां मर्त्यानां काव्यं शास्त्रं न तद्भवेत् ॥
विष्णुरुद्रान्तरं ब्रूयाद्यच्छ्रीगौर्योश्च पार्थिवं ।
तत्रास्ति नाम मर्त्यानां काव्यं ज्ञेयं विचक्षणैः ॥"

इति सन्दर्भे तयोरभेदनिश्चयस्यावश्यकत्वम्, भेदनिश्चयस्य हेयत्वञ्च स्फुटमुक्तम् ॥

एवमग्निपुराणे—

"त्वमेवाहमहञ्च त्वं ह्येवाहं स चाप्यहम्" ।

इति शिवं प्रति श्रीरामवचने ;

तत्रैव—

"अहमेव भवान् शम्भो त्वमेवाहं न संशयः ।
यः पश्येदावयोर्भेदमाकल्पं नरकं व्रजेत्" ॥

इति शिवं प्रति दत्तात्रेयवचने ;

तथैव—

"आवयोः कुरुते भेदं स मूढात्मा विनश्यति ।
यस्मिन्भिन्नावयोर्नास्ति स मन्मायाविमोहितः ।
भृगुनन्दीशशापान्तस्त्वां दूषयति मामपि" ।

इति शिवं प्रति नारायणवाक्ये च तयोरभेदस्यावश्यकत्वं भेदबुद्धेर्हेयत्वञ्च स्फुटमुक्तम् ।

कूर्मे—

"अहमेव महादेवो न भिन्नो परमार्थतः ।
विभज्य स्वेच्छया ज्ञानं सोऽन्यथाधीश्वरः स्थितः" ॥

इति ऋषीन्प्रति विष्णुवचने ;

"यस्तवैष महायोगी रक्षको विष्णुरव्ययः ।
स देवदेवो भगवान्महादेवो न संशयः ॥

वेदानुवर्तिनं रुद्रं देवं नारायणं तथा ।
एकीभावेन पश्यन्ति मुक्तिभाजो भवन्ति ते ॥

यो विष्णुस्स स्वयं रुद्रो यो रुद्रस्स जनार्दनः ।
इति मत्वा भजेद्देवं स याति परमां गतिम् ।

सृजते यज्जगत्सर्वं विष्णुस्तत्पाति ईश्वरः ।
इत्थं जगत्सर्वमिदं रुद्रनारायणात्मकम्" ॥

इति दक्षं प्रति ब्रह्मवचने ;

तत्रैव—

"ईश्वरेणैकतापन्नं सम्पश्यन् ब्रह्मवादिनः ।
दृष्ट्वा तदैश्वरं रूपं रुद्रनारायणात्मकम्" ॥

इतीश्वरगीतावचने ।

तत्रैव—

"पश्यध्वमात्मनात्मानममलं परमं पदम् ।
नावयोर्विद्यते भेद एकं पश्यन्ति सूरयः ॥

अयं नारायणो योऽहमीश्वरो नात्र संशयः ।
नान्तरं ये प्रपश्यन्ति तेषां देयमिदं पदम्" ॥

इति शिववचने ;

तत्रैव—

"ये चान्यथा प्रपश्यन्ति लोके भेददृशो जनाः ।
ततो मां न प्रपश्यन्ति जायन्ते च पुनः पुनः ॥

येऽन्यथा मां प्रपश्यन्ति मत्वैवं देवतान्तरम् ।
ते यान्ति नरकान् घोरान् नाहं तेषु व्यवस्थितः ॥

मूर्खं वा पण्डितं वापि ब्राह्मणं वा महाश्रयम् ।
मोचयामि श्वपाकं वा न नारायणनिन्दकम्" ॥

इति श्रीमन्नारायणेन शिववचने च विष्णुशिवयोरभेदस्यावश्यकत्वं तयोर्भेदबुद्धिमतां रुद्रोपासनेनापि सद्गतिराहित्यं नरकगमनं नारायणनिन्दकस्य चण्डालादप्यत्यन्तनिकृष्टत्वञ्च कण्ठरवेणोक्तम् ।

एवं विष्णुपुराणे—

"सृष्टिस्थित्यन्तकारिणीं ब्रह्मविष्णुशिवात्मिकाम् ।
स संज्ञां याति भगवानेक एव जनार्दनः ॥

ब्रह्मत्वे सृजते सर्वं स्थितौ पालयते नमः ।
रुद्ररूपाय कल्पान्ते नमस्तुभ्यं त्रिमूर्तये" ॥

तत्रैव शिवं प्रति श्रीकृष्णः—

त्वया यदभयं दत्तं तद्दत्तमखिलं मया ।
मत्तो विभिन्नमात्मानं द्रष्टुं नार्हसि शङ्कर ॥

योऽहं स त्वं जगच्चेदं सदेवासुरमानुषम् ।
अविद्यामोहितात्मानः पुरुषा भिन्नदर्शिनः" ॥

इति वचनेषु तयोरभेदः स्फुटमुक्तः ।

एवं महाभारते आरण्यपर्वणि—

"शिवाय विष्णुरूपाय शिवरूपाय विष्णवे ।
दक्षयज्ञविनाशाय हरिरूपाय ते नमः" ॥

इत्यत्र ;

शान्तिपर्वणि—

"उग्रध्यानपरो रुद्रो योगी त्रिपुरमर्दनः ।
दक्षमृत्युहरश्चैव भगनेत्रहरस्तथा ॥

नारायणात्मको ज्ञेय पाण्डवेय महामते ।
तस्मात्सम्पूज्यमाने वै देवदेवे महेश्वरे ॥

सम्पूजितो भवेत्पार्थ देवो नारायणः प्रभुः ।
यस्त्वं वेत्ति स मां वेत्ति योऽनु त्वं स हि मामनु ॥

रुद्रो नारायणश्चेति तत्त्वमेकं द्विधाकृतम् ।
न हि मे केनचिद्द्वेष्यः परः पाण्डवनन्दन ॥

इति सञ्चिन्त्य मनसा पुराहं विश्वमीश्वरम् ।
पुत्रार्थमाराधितवानात्मानमात्मनः ॥

न हि विष्णुः प्रणमति कस्मैचिद्विबुधाय तु ।
ऋत आत्मानमेवेति ततो रुद्रं नमाम्यहम् ॥"

इति सन्दर्भे च विष्णुशिवयोरभेदो विस्पष्टः ।

हरिवंशे—

"अहं त्वं सर्वगो देव त्वमेवाहं जनार्दन ।
आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते ॥

नामानि तव गोविन्द यानि लोके महान्ति च ।
तान्येव मम नामानि नात्र कार्या विचारणा ॥

त्वदुपासा जगन्नाथ सैवास्तु मम गोपते ।
यश्च त्वां द्वेष्टि देवेश स मां द्वेष्टि न संशयः" ॥

इति विष्णुं प्रति शिववचनसन्दर्भे तयोरभेदः स्फुटमभिहितः । तानि इतिहासपुराणादिवचनानि उदाहृतश्रुतिवचनानामुपबृंहणानि भवन्तीत्येतैर्वचनैरुक्तोऽर्थस्सर्वोऽपि श्रुत्यर्थ एव । अस्यार्थस्य सर्वस्याप्यभेदबोधकत्वेन उदाहृतसकलश्रुत्यपेक्षितत्वात् ।

ननु विष्णुशिवयोरभेदबोधकश्रुतिवचनानां कर्मप्रकरणोपासनाप्रकरणज्ञानप्रकरणेषु स्थितत्वेन तत्तत्प्रकरणबोधितस्य तत्तदङ्गतायास्सिद्धत्वेनान्याङ्गरूपाभेदस्य पृथक्फलाकाङ्क्षायाः प्रसक्त्यभावेन न्यायमभेदश्रुतीनां फलाकाङ्क्षाभिधानमिति चेदुच्यते । तैत्तिरीयोपनिषदि "सहस्रशीर्षं देव"मित्यनुवाकात्पूर्वोत्तरानुवाकेषु शिवोपासनाभिधायकेषु शिवाभिधानश्रुतिभिर्बह्वीभिरेतदुपनिषत्प्रतिपाद्यपरमात्मनि शिवत्वाभिधानेन सहस्रशीर्षमित्यनुवाके

विष्णवभिधानश्रुतिभिरेकादशभिः एकविष्णुत्वलिङ्गेन चेति । द्वादशभिः तत्परमात्मनि विष्णुत्वबोधकैर्विष्णोर्द्वादशवारं तत्परमात्मरूपेण शिवाभेद-बोधनेन तदनन्तरानुवाके च तयोरभेदबोधनेन अम्भस्यनुवाकादौ च विष्णुत्वलिङ्गाभ्यां विष्णवभिधानश्रुतिभ्याञ्च चतुर्वारं तयोरभेदबोधनेन चानेकवारं बोधिताभेदस्य कर्माङ्गत्वं, शिवोपासनाप्रकरणे एकवारं बोधि-तस्य शिवोपासनाङ्गत्वं, विष्णूपासनाप्रकरणे एकवारं बोधितस्य विष्णू-पासनाङ्गत्वञ्च सम्भवतीति अन्यासां तयोरभेदबोधकविष्णवभिधानश्रुतीनां सिद्धैव फलाकाङ्क्षेति फलकल्पनमावश्यकमेव । अन्यथा बह्वीनां विष्णव-भिधानश्रुतीनां वैयर्थ्यापत्तेः । नृसिंहतापिन्यामुपनिषदन्तरेषु चायमर्थो द्रष्टव्यः ।

एतेन "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोती"-त्यादौ "अङ्गेषु फलश्रुतिरर्थवादः" इति सुप्रसिद्धत्वेनाङ्गबोधकत्वेऽस्यान-पृथक्फलाकाङ्क्षाकल्पनमयुक्तमिति निरस्तम् । पर्णमय्याः क्रतुसम्बन्धं विना फलजनकत्वासम्भवेन "यस्य पर्णमयी"ति वाक्यस्य पर्णमय्याः क्रतुसम्बन्धबोधनेनैव चारितार्थ्यस्य फलसम्बन्धबोधने सामर्थ्याभावेन, उभय-सम्बन्धबोधने वाक्यभेदप्रसङ्गेन तद्वाक्यस्य फले तात्पर्याभावेन तत्र फल-श्रुतेरर्थवादतया युक्तत्वेनात्राभेदबोधकश्रुतीनां तदभेदे प्रकृतोपासनाङ्ग-त्वबोधकताभावेन "दध्नेन्द्रियकामस्य जुहुया"दित्यादिवाक्यानामिव फल-सम्बन्धाभिधाने तात्पर्यसम्भवाच्च । एषानुमन्त्रणमन्त्रस्येवाभेदबोधकवचनानां तत्तत्प्रकरणेभ्य उत्कर्षसम्भवात् । अन्यथा बह्वभिधानश्रुतीनां वाक्यानाञ्च वैयर्थ्यापत्तेः । वेदेक्षितार्थस्य पुराणादिवचनैस्समर्पणसम्भवात् । एत-द्वाक्यानां फलसम्बन्धबोधकत्वे सम्भवति वैयर्थ्याङ्गीकारस्यासङ्गतत्वात् । अतः श्रुतिवचनैस्तयोरभेदे बोधिते तदभेदनिश्चयस्य किं फलमित्याका-ङ्क्षायामुदाहृतपुराणादिवचनैरुक्तफलेषु यस्य कस्यचिद्ग्रहणे विनिगमका-भावात् । अत एते पुराणादिवचनैरुक्तार्थस्य सर्वस्यापि श्रुत्यपेक्षितत्वेन श्रौतत्वं सिद्धम् ।

भगवद्गीतासु नवमाध्यायवचनद्वये तद्भाष्ये च विष्ण्ववमानेन सकलकर्मवैफल्यं ज्ञानवैफल्यं नष्टविवेकित्वमत्यन्तदुष्टप्रकृतिकत्वञ्च भवतीत्युक्तम्। तदिदं वचनद्वयं तद्भाष्यञ्च—

"अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्।
परं भावमजानन्तो मम भूतमहेश्वरम्॥ (गीता. ९-११)

भाष्यम्॥ एवं मा नित्यशुद्धमुक्तस्वभावं सर्वज्ञं सर्वभूतानामात्मानमपि सन्त अवजानन्ति अवज्ञां परिभवं कुर्वन्ति। मा मूढा अविवेकिनः। मानुषीं तनुं मनुष्यसम्बन्धिनीं तनुमाश्रितं मनुष्यदेहेन व्यवहरन्तमित्येतत् परं प्रकृष्टभावं परमार्थतत्त्वम् आकाशकल्पं आकाशादप्यान्तरतममजानन्तः। मम भूतमहेश्वरं सर्वभूताना महान्तमीश्वरं स्वमात्मानञ्च। ततश्च तस्य ममावज्ञाभावनेन आहतास्ते वराकाः। कथम्?

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः।
राक्षसीमासुरीञ्चैव प्रकृतिं मोहिनीं श्रिताः॥ (गीता. ९-१२)

मोघाशा वृथाशा आशिषो येषां ते तथा। मोघकर्माणो यानि चाग्निहोत्रादीनि तैरनुष्ठीयमानानि कर्माणि तानि च तेषां भगवत्परिभवात् मोघान्येव निष्फलानि भवन्तीति मोघकर्माणः। तथा मोघज्ञाना निष्फलविज्ञानाः। ज्ञानमपि तेषां निष्फलमेव स्यात्। विचेतसो विगतविवेकाश्च भवन्तीत्यभिप्रायः। किञ्च ते राक्षसीं रक्षसां प्रकृतिमसुराणाञ्च प्रकृतिं मोहिनीं मोहकरीं श्रिताः आश्रिताः। छिन्धि भिन्धि खाद पिब परस्वमपहरेत्येवंशीलाः क्रूरकर्माणो भवन्तीत्यर्थः" इति।

अत्र गीतासन्दर्भे तद्भाष्ये च सर्वेश्वरं सन्तं विष्णुं अयं सर्वेश्वरो न भवति किन्तु स्वल्प एवेति यो निश्चिनोति स विष्ण्ववमन्ता। तस्य च मोघाशा मोघकर्माण इत्यादिनोक्तानि दूषणादीनि भवन्तीत्युक्तमिति न्यायसाम्यात् सर्वेश्वरं सन्तं शिवं अयं सर्वेश्वरो न भवति किन्तु स्वल्प एवेत्यवजानानि तस्यापि मोघाशेत्यादिनोक्तदूषणानि

समानान्येवेति सिद्धत्वेन विष्णुशिवयोर्भेदवादिनां पक्षे उभयोस्सर्वेश्वरत्वासम्भवेनान्यतरस्य सर्वेश्वरत्वस्वरूपत्वानिश्चयरूपावज्ञा अवश्यं कार्येति तयोर्भेदवादिनश्शैवसंज्ञका वैष्णवसंज्ञकाश्च सर्वे मूर्खा मोघाशेति वचनेन दूषिता एवेति सिद्धम् ॥

किञ्च "शिवाय विष्णुरूपाय" इत्युदाहृतस्कन्दोपनिषत्सन्दर्भे—

"यथान्तरं न पश्यामि तथा मे स्वस्ति चायुषि"

इति वचने पर्यालोचिते सिद्धमेवोदाहृतपुराणादिवचनजातस्य सर्वस्याप्येतच्छ्रुत्यर्थावबोधत्वम् । तत्र यथा यत्प्रकारेणान्तरं विष्णुशिवयोर्भेदं तयोरेव प्रकृतत्वान्न पश्यामि, तथा तेन प्रकारेण मे स्वस्तिः तदाशिषा सद्यश्चतुर्विधपुरुषार्थरूपः क्षेमः, चतुर्विधपुरुषार्थसाधनीभूतपुण्यञ्च मुक्तिर्वा भवत्वित्यर्थः । "स्वस्त्याशीः क्षेमपुण्यादौ" इत्यमरकोशोक्तेः स्वस्तीत्यविनाशनामेति नैरुक्तवचनात् आयुषि सत्त्वे इह जन्मनीति भावः । यथातथाशब्दप्रयोगस्यायं भावः—केचिद्विष्णुशिवयोर्जीवत्वेनेश्वरत्वेन भेदं वदन्ति । अन्ये तु धर्मधर्मिभावेन । अपरे त्वाधुनिका मूढा ईश्वरचैतन्यत्वे समानेऽपि तत्तन्मूर्त्यवच्छेदेन तच्चैतन्यस्य भेदं वदन्तीति बहुभेदे प्राप्ते तन्नैकविधं भेदं यो न पश्यति तस्याभिलषितश्रेयांसि यत्किञ्चिद्भवति न तु सर्वम् । यस्तु सकलविधमपि भेदं न पश्यति तस्याभिलषितं श्रेयस्सर्वं भवेदिति । अन्यथा यथातथाशब्दयोर्वैयर्थ्यापत्तेः । तयोर्यथैक्यं पश्यामीति वक्तुं शक्येऽपि तदपहाय "अन्तरं न पश्यामी" त्यन्तरपदनञ्पदयोराम्नानस्यायं भावः—

सकलविधमपि भेदं यः पश्यति तस्यानर्थत्वेन प्रसिद्धसकलानर्थोऽपि भवेत् । यस्त्वेकविधमेव भेदं पश्यति तस्य स्वल्प एवानर्थो भवतीति । अन्यथा पदद्वयाम्नानस्य वैयर्थ्यापत्तेः । तयोर्जीवत्वेनेश्वरत्वेन भेददर्शिनस्सकलविधभेददर्शनस्य तत्तन्मूर्त्यवच्छेदेन भेददर्शिनस्तु एकविधभेददर्शनस्य च सिद्धत्वात् । एवञ्चास्यां श्रुतौ शब्दार्थाभ्यामवगतार्थ एवोपदर्शितपुराणादिवचनैर्दर्शित इति । तस्यार्थस्य सर्वस्यापि श्रौतत्वे न विवादावकाशः । तथा चैतच्छ्रुत्यनुरोधेनाप्युपदर्शिताभेदश्रुतीनामुक्तार्थसिद्ध

एव । तस्मान्निरूपविष्णुशिवयोरसर्वज्ञत्वसर्वेश्वरत्वसर्वान्तर्यामित्वसकलज ।दुदयास्थनिलयादिहेतुत्वविशिष्टनिम्बचैतन्यरूपेणाभेदोऽसद्ध एव । वैदिकमार्गप्रवर्तकैर्भगवत्पादैस्तयो कृताभेदप्रतिष्ठापनं दर्शितमेव । अप्पय्यदीक्षितानामयमभेदो वेदतात्पर्यविषयत्वेनाभिमत इत्येतच्च शिवतत्त्वविवेकसन्दर्भस्य सिद्धान्तलेशसङ्ग्रहसन्दर्भस्य चोदाहरणेन प्रागेव दर्शितः ॥

ब्रह्मतर्कस्तवे तु दीक्षितैस्तयोरभेदो बहुधोक्तः । तत्र श्रीकृष्णेनार्जुनाय प्रदर्शित विश्वरूपं शिवस्यैव रूपमित्युक्त्वाऽभिहितम्—

"एतच्छ्रुत्वा वचन केशवस्य' त्यादिसन्दर्भेऽभिहितस्यार्जुनस्य यानि कृष्णं प्रति वचनानि तानि कथमुपपद्यन्ताम्? तानि हि कृष्णस्तुतिवचनानि प्राचीनस्वापराधसहनप्रार्थनासहितानि कृष्णस्यैव तद्रूपान्तरं त्वेन इष्टमित्यर्जुनस्याशयं गमयन्तीति चेत् यद्यभेदस्तदा न काचिदनुपपत्तिः । यदि स नेष्यते तदाप्येवम्भूतशिवयोगिनिष्ठत्वरूपमाहात्म्यातिशयदर्शनेन स्तुत्यादिकमिति तदुपपत्ते "रिति । तदनन्तरं तस्मात्सर्वथा कृष्णस्य शिवाभेदेन शिवयोगसामर्थ्यलब्धशिवाहम्भावभावनया शैवरूपप्रदर्शने न कदाचिदनुपपत्तिरित्युक्तम् । तदनन्तरं गीतासन्त्यन्त च तत्र तत्र विश्वरूपविग्रहस्य कृष्णेनात्मकीयत्व यद्व्यवहृत तस्य सर्वस्याप्यभेदेन शिवाहम्भावभावनयोपपत्तेरित्युक्तम् । तदनन्तर यत्तु "उत्तम. पुरुषस्त्वन्य" इति श्लोकानन्तरं—

"यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम. " ॥(गीता १५-१८)

इति भगवता क्षराक्षरातीतत्वेन स्वस्यापि साम्यात्पुत्तमत्वमुक्तम्, तदीश्वराभेदात्तद्विषययोगाद्वोपपादनीयमित्युक्तमित्येतेषु स्थलेषु विष्णुशिवयोरुक्ताभेदस्सर्वज्ञत्वादिविशिष्टनिम्बचैतन्यरूपेणैवेति दीक्षितानामाशयो विस्पष्ट एव । अन्यथोपदर्शितभेदपक्षेऽप्यपि विष्णोश्शुद्धचैतन्यरूपेण शिवाभेदो दीक्षिताना पक्षे सिद्ध एवेत्यसाङ्कर्यापत्ते । न च दीक्षितैरेव कृते रत्नत्रयपरीक्षाख्यग्रन्थे दर्शितधर्मिधर्मरूपेण विष्णुशिवयोरीश्वरत्वपक्षाभिप्रायेण

दीक्षितैरेतदभेदप्रदर्शनं कृतमित्युक्ते को दोष इति वाच्यम्। तथात्वे सिद्धान्तलेशसङ्ग्रहे दीक्षितैरेव विष्णोर्मुमुक्षुप्राप्यबिम्बचैतन्यरूपत्वानिरवग्रह-स्वातन्त्र्यसाम्याधिकरणादित्याद्यभिधानस्यासङ्गत्यापत्ते। अतस्तयोरुक्ताभेद एव वैदिकत्वेन तेषां तात्पर्यविषय इति सिद्धम्। तैर्विष्णुनिकर्षाभिधानन्तु शिवनिन्दकानां यथाकथञ्चिदनिष्टं वक्तव्यमित्याशयेनेति प्रागेवोक्तम्। नृसिंहाश्रमचरणैरद्वैतदीपिकायामयमप्यभेदः कण्ठरवेणोक्तः। अन्येषामप्यद्वैतवादिनां महतामयमभेदोऽभिमत एवेत्येतत्तत्कृतग्रन्थेषु व्यक्तमेव।

एवञ्च बिम्बचैतन्यरूपसर्वेश्वरस्यैव विष्णुमूर्तिशिवमूर्तिस्तदवतारमूर्तयश्चेति तयोर्मूर्तिरूपविष्णुशिवयोस्तदवताराणाञ्च ज्ञानबलैश्वर्यादिषु तारतम्याभावस्सिद्ध एव।

नन्वस्तु तुरीयविष्णुशिवयोरेवम् मूर्तित्रयान्तर्गतविष्णुशिवयोर्विष्ण्ववताराणां रामकृष्णादीनां शिवावताराणां भैरववीरभद्रनन्दिकेश्वरदुर्वासःप्रभृतीनाञ्च सर्वेश्वरत्वमीश्वरचैतन्यरूपेणैक्यं मूर्तिरूपाणां ज्ञानबलादिसाम्यञ्च न सम्भवत्येव। तेषामुत्पन्नत्वाज्ञत्वदरित्वादिश्रवणात् परस्परजयापजयादिश्रवणाच्चेति चेदुच्यते। नृसिंहपूर्वतापिन्या पञ्चमोपनिषदि द्वितीयखण्डे "ब्रह्मविष्णुमहेश्वरा नाम्ना"मिति सन्दर्भे विष्णुशब्दाबाधितसर्वव्यापकत्वेन मूर्तित्रयान्तर्गतविष्णोस्सर्वेश्वरत्वं सिद्धमेव। सर्वव्यापकत्वस्य सर्वेश्वरत्वालिङ्गत्वात्। एवं महेश्वरशब्दोक्तमूर्तित्रयान्तर्गतशिवस्य तन्महेश्वरशब्दरूपाभिधानश्रुत्या सिद्धमेव सर्वेश्वरत्वम्। "ब्रह्मविष्णुमहेश्वरा नाम्ना"मिति वाक्यन्तु तयोरीश्वरत्वनिश्चायकश्रुतिलिङ्गानुसारेण स्वेच्छया कृताभिनयरूपाणां नृसिंहावताराणां तदुपासनगतांश्च बोधयति न तु तयोर्जीवत्वप्रत्यायकमिति तैः श्रुतिलिङ्गापेक्षया वाक्यस्य दुर्बलत्वात्। अतस्सिद्धमत्रापि तयोस्सर्वेश्वरत्वम्। एवं ततः प्राक् तृतीयोपनिषदि द्वितीयखण्डे "यो वै श्रीनृसिंहो देवो भगवान् यश्च विष्णुस्तस्मै वै नमो नमः यश्च महेश्वरः" इति सन्दर्भे चैतद्वाक्याभ्यामवगतस्य तयोर्नृसिंहविभूतित्वस्याभिनयरूपत्वावगमक एव

सोऽर्थस्सिद्धः । एवं ततः प्राक् प्रथमोपनिषदि द्वितीयखण्डे "स ब्रह्मा स शिवस्स हरि"रित्यत्र शिवशब्दावगतेन निरवधिकमाङ्गल्यरूपेश्वरत्वलिङ्गेन हरिशब्दावगतेन सकलजगत्संहर्तृत्वरूपेश्वरत्वलिङ्गेन च तयोस्सोऽर्थस्सिद्धः । उत्तरतापिन्या नवमखण्डे "ब्रह्मविष्णुशिवरूपिणी चैतन्यदीप्ते"त्यत्र च सोऽर्थस्सिद्धः । एवं कैवल्योपनिषदि "स ब्रह्मा स शिव" इत्यत्र, "स एव विष्णु"रित्यत्र च सोऽर्थस्सिद्ध एव । एवं तैत्तिरीयनारायणानुवाके "स ब्रह्मा स शिवस्स हरि"रित्यत्र च, एवमथर्वशिरसि "यो वै रुद्रस्स भगवान् यश्च विष्णुस्तस्मै वै नमो नमः । यो वै रुद्रस्स भगवान् यश्च महेश्वर" इति सन्दर्भे च, एवं महोपनिषदि "न ब्रह्मा नेशान" इत्यादिसन्दर्भे ईशानश्रुतिद्वयेन महादेवत्वलिङ्गेन च मूर्तित्रयान्तर्गतशिवस्य सर्वेश्वरत्वं निष्प्रत्यूहं सिद्धमिति प्रागेव दर्शितम् । अथर्वशिखायां "सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्त" इत्यत्र विष्णुशिवयोस्सर्वेश्वरत्वं सिद्धमिति प्रागेव दर्शितम् । एवं श्रुत्यन्तरेष्वयमर्थो योजनीयः । एवं विष्णोस्तुरीयत्वप्रत्यायकत्वेन प्रागुदाहृते—

"मध्यतो रुद्रमीशानं जगदन्तकरं मुने ।
पालनायास्य जगतो वामाङ्गाद्विष्णुमव्ययम् ॥"

इति नारदीयपुराणवचनसन्दर्भे मूर्तित्रयान्तर्गतशिवस्येशानमित्यभिधानश्रुत्या जगदन्तकरत्वरूपेश्वरत्वलिङ्गेन च, तथा मूर्तित्रयान्तर्गतविष्णोर्जगत्पालकत्वरूपेण विष्णुशब्दावगतसर्वव्यापकत्वरूपेण चेतीश्वरत्वलिङ्गाभ्यां च सर्वेश्वरत्वं सिद्धमेव । अत्रापि नारायणात्तयोरुत्पत्त्यभिधायकवाक्यं तयोस्सर्वेश्वरत्वनिश्चायकप्रबलश्रुतिलिङ्गानुसारेण स्वेच्छयाङ्गीकृताभिनयरूपोत्पत्त्यभिधायकमेव; न तु तयोर्जीवत्वप्रत्यायककर्माधीनोत्पत्त्यभिधायकम् । एवं पुराणेतिहासादिषु सर्वत्र द्रष्टव्यम् । पुराणादिष्वभिहितं तयोरुत्पन्नत्वतमस्विलोपासकत्व दुःखित्वताड्यत्वभेद्यत्वपलायमानत्वादिकं सर्वं बह्वीषु श्रुतिषु बह्वभिधानश्रुतिभिः बहुलिङ्गैश्च तयोरवधृतसर्वेश्वरत्वानुसारेण

स्वेच्छयाङ्गीकृताभिनयरूपमेव । अन्यथा श्रुतिविरोधे पुराणादीनां विरोधाधिकरणन्यायेनाप्रामाण्यापत्तेः । अतस्सिद्धमेव मूर्तित्रयान्तर्गतविष्णुशिवयोस्सर्वेश्वरत्वम् ।

एवं विष्णुशिवयोरवताराणाञ्च । तत्र श्रीरामस्य विष्णुत्वं श्रीरामायणे सम्यगेव दर्शितम् । रामायणे हि राममाहात्म्योपक्रमे देवैः प्रार्थितस्सन् लक्ष्मीसहायो विष्णुरेव श्रीरामरूपोऽभवत्, न त्वन्य इत्येतत् तथा उपसंहारे च श्रीरामो विष्णुरूपस्सन् लक्ष्मीसहायोऽभवदित्येतच्च विस्पष्टमेवेत्युपक्रमोपसंहारयोरैकरूप्येण श्रीरामस्य विष्णुरूपत्वं विस्पष्टम् । तत्रैव

"अक्षय्यं मधुहन्तारं जानामि त्वा पुरोत्तमम् ।"

इति श्रीरामस्य विष्णुत्वं दर्शितम् । युद्धकाण्डे महावाक्यसन्दर्भे—

"भवान्नारायणो देवः श्रीमांश्चक्रायुधो विभुः" इति,

"विष्वक्सेनश्चतुर्भुज" इति, "शार्ङ्गधन्वा हृषीकेश" इति "पुरुषः पुरुषोत्तम" इति "विष्णुः कृष्णश्चैवे"ति, "सीता लक्ष्मीर्भवान्विष्णुर्देवः कृष्ण" इति च श्रीरामस्य विष्णुत्वं बहुधाभ्यासेन दर्शितम् । तत्रैव श्रीरामस्य सकलजगत्कारणत्वं सकलजगद्रक्षकत्वं सकलजगदधिष्ठानत्वं सकलजगदात्मत्वं सकलजगद्व्यापकत्वमेतीश्वरत्वलिङ्गानि दर्शितानि । उत्तरकाण्डे च:—

"तवाहं पूर्वके भावे पुत्रः परपुरञ्जय ।
मया संभावितो वीर कालस्सर्वसमाहरः ॥

पितामहश्च भगवानाह लोकपतिः प्रभुः ।
समयस्ते महाबाहो स्वान् लोकान् परिरक्षितुम् ॥

संक्षिप्य च पुरा लोकान् मायया स्वयमेव हि ।
महार्णवे शयानोऽप्सु मात्र पूर्वमजोजनः ॥

भोगवन्तं ततो नागमनन्तमुदकेशयम् ।
मायया जनयित्वा त्वं द्वौ च सत्त्वौ महाबलौ ॥

मधुश्च कैटभश्चैव ययोरस्थिचयोद्भवा ।
इयं पर्वतसम्बाधा मेदिनी चाभवन्मही ॥

पद्मे दिव्यार्कसङ्काशे नाभ्यामुत्पाद्य मामपि ।
प्राजापत्यं त्वया कर्म सर्वं मयि निवेशितम् ॥

सोऽहं सन्यस्तभारो हि त्वामुपासे जगत्पतिम् ।
रक्षां विधत्स्व भूतेषु मम तेजस्करो भवान् ॥

ततस्त्वमपि दुर्धर्षस्तस्माद्भावात्सनातनात् ।
रक्षार्थं सर्वभूतानां विष्णुस्त्वमभिजग्मिवान् ॥

अदित्यां वीर्यवान्पुत्रो भ्रातॄणां हर्षवर्धनः ।
समुत्पन्नेषु कृत्येषु लोकमर्माय कल्पसे ॥

स त्वं वित्रास्यमानासु प्रजासु जगतो वर ।
रावणस्य वधाकाङ्क्षी मानुषेषु मनोऽदधाः ॥"

इति कालेनोक्तब्रह्मणो वचनसन्दर्भे श्रीरामस्य विष्णुत्वं सर्वेश्वरत्वश्च स्फुटमेवोक्तम् ।

पद्मपुराणे तु सकलजगदुदयस्थितिलयहेतोस्सर्वात्मनस्सर्वव्यापकस्य महाविष्णोरेव श्रीरामरूपेणाविर्भावः । आविर्भावसमये च शङ्खचक्रकौस्तुभपीताम्बरादिविष्णुचिह्नैश्चाह्नितत्वं दशरथादिभ्यो विश्वरूपप्रदर्शनं पश्चान्मानुषभावाश्रयणं रावणवधानन्तरं पट्टाभिषेकसमये च सर्वेभ्यो विश्वरूपप्रदर्शनं सर्वेश्वरत्वश्च स्फुटमेवोक्तम् । विष्णुपुराणभारतभागवतादिसकलपुराणेतिहासादिषु सकलजगन्नियन्ता विष्णुरेव श्रीरामरूपोऽभवदिति कण्ठरवेणोक्तम् . श्रीरामतापिन्युपनिषदि श्रीरामस्य विष्णुत्वं सकलजगदुदयस्थितिलयहेतुत्वं सर्वोपास्यत्वं सकलफलप्रदत्वं मुक्तिदत्वादिकश्च कण्ठरवेणोक्तम् । सा चोपनिषद्व्याख्याता च विद्यारण्यचरणैरानन्दवनचरणैरन्यैश्च । सर्वेश्वरश्चैव श्रीरामरूपोऽभवदिति शेषधर्मपाद्मपुराणादिष्वभिहितम् । अन्यः कश्चन जीवः श्रीरामरूपोऽभवदिति न

क्वापि रामायणादिषु सूचितमपि । एवं श्रीकृष्णस्य गोपालतापिन्युपनिषदि विष्णुत्वसर्वेश्वरत्वादिकं कण्ठरवेणोक्तम् । सा चोपनिषद्व्याख्याता च विद्यारण्यचरणैरन्यैश्च । विष्णुपुराणभारतभागवतहरिवंशादिसकलपुराणेतिहासादिषु श्रीकृष्णस्य विष्णुत्वसर्वेश्वरत्वादिकं कण्ठरवेणोक्तम् । श्रीनृसिंहस्य नृसिंहतापिन्या पुराणेतिहासादिषु च विष्णुत्वसर्वेश्वरत्वादिकं कण्ठरवेणोक्तम् । त्रिविक्रमादीनामपि विष्णुत्वादिकमुक्तमेव । दुर्वासोभैरववीरभद्रनन्दिकेश्वरप्रभृतीनां शिवत्वं सर्वेश्वरत्वादिकञ्च मार्कण्डेयपुराणस्कान्दपुराणादिषु कण्ठरवेणोक्तम् । एवञ्च विष्णुशिवयोस्सर्वेश्वरत्वेन तयोरवताराणां सर्वेषां सर्वेश्वरत्वं सिद्धमेव ।

ननु सर्वेष्ववतारेष्वज्ञत्वकामित्वक्रोधित्वदुःखित्वनाश्यत्वादिरूपस्य तपस्वित्वोपासकत्वतत्फलभोक्तृत्वरूपस्य वरेण शापेन च सुखदुःखभागित्वरूपस्य च बन्धस्य च पुराणादिभ्यः श्रवणेनैतेषां सर्वेषां जीवत्वकल्पनमेवोचितम् । "तत्सृष्ट्वा तदेवानुप्राविशत्" इत्यादौ परमात्मन एव जीवरूपेण प्रवेष्टृत्वस्य सुप्रसिद्धत्वादिति चेदुच्यते । अत्र किं विष्णुशिवयोर्बिम्बचैतन्यरूपयोरेव जीवत्वं बद्धत्वञ्चोच्यते अथवा प्रतिबिम्बरूपमापन्नयोः ?

नाद्यः—तथात्वे प्रतिबिम्बजीवत्वोत्पन्नत्वाज्ञानावृतत्वपराधीनत्वदुर्बलत्वादीनि न संभवन्तीति तेषु स्थलेषूक्तदूषणानां सर्वेषामत्रापि समानत्वात् ।

किञ्चात्रात्यन्तासङ्गत एवावताराणमज्ञानसुखदुःखाद्यङ्गीकारः । तथात्वे तेषामभिहितज्ञानमुक्त्योरङ्गीकरापत्त्या कल्पानामानन्त्येनानन्तकल्पेषु विष्णुशिवयोरनन्तवारं पुनः पुनर्बन्धमुक्त्योरापत्तेः ।

न द्वितीयः—जीवानादित्वनेश्वरभेदानादित्वाविद्यानादित्वाविद्याचैतन्यानादित्वसिद्धान्तानां भङ्गापत्तेः । दिने दिने चन्द्रसूर्ययोराविर्भावस्येव ब्रह्मणो दिवसरूपकल्पेष्वतीतेषु भविष्यत्सु च विष्णुशिवयोरवताराणामतीतानां भविष्यतामाविर्भावस्यानादित्वगन्धकल्पनस्याप्यवकाशाभावात्, तेषामकृताभ्यागमप्रसङ्गाच्च तेषां जीवत्वकल्पने मानाभावाच्च ।

न च तेषामज्ञत्वदुःखित्वाद्यन्यथानुपपत्तिरेव मानमिति वाच्यम् । तेषामज्ञत्वदुःखित्वाद्यभिधायकवचनानां स्वेच्छयाङ्गीकृताभिनयरूपाज्ञत्वाद्यभिधायकत्वेन तद्वचनानामन्यथानुपपत्तिप्रसक्तेरेवाभावात् । अवताराणां विष्णुत्वशिवत्वाभिधायकशब्देषु लक्षणाङ्गीकारापेक्षया तेष्वज्ञत्वदुःखित्वाद्यभिधायकवाक्यानां लक्षणां विना स्वारस्यभङ्गमात्राङ्गीकारेण तद्वाक्यानामभिनयरूपाज्ञत्वाद्यभिधानपरत्वाङ्गीकारस्यैव युक्तत्वात् । अवताराणामज्ञत्वाद्यभिधायकचरमश्रुतवचनानुसारेण तेषु विष्णुत्वशिवत्वाभिधायकप्रथमश्रुतवाक्यानां स्वारस्यभङ्गाङ्गीकारे उपक्रमाधिकरणविरोधापत्तेश्च । किञ्चावतारेष्वीश्वरत्वलिङ्गानां गौणत्वापत्तेः । अपि च श्रीरामे तमस्वित्वदुःखसंसर्गादीनामभिनयरूपत्वमुत्तररामायणे स्फुटं दर्शितम् । तत्र विष्णुर्भृगुपत्नीं हत्वा पत्नीवियोगदुःखमनुभवितुं भृगुणा दत्तशापं प्राप्य तच्छापसत्यत्वं प्रत्याययितुं श्रीरामरूपोऽभवदित्युक्त्या तदर्थस्य विस्पष्टत्वात् । तमस्वित्वदुःखसंसर्गादेर्विष्णावसम्भवेन तस्याभिनयरूपताया आवश्यकत्वात् । श्रीरामात्मकप्रतिबिम्बरूपजीवो भूत्वा तदनुभूतवानिति कल्पने तु विष्णौ सकलजीवरूपेण सुखदुःखानुभवस्य सिद्धत्वेन श्रीरामात्मकजीवरूपेणापि तदनुभूतवानित्युत्तररामायणवाक्यसन्दर्भो वक्तीति कल्पने तत्सन्दर्भस्य प्रयोजनगन्धस्याप्यभावेनाप्रामाण्यापत्तेः सर्वेश्वरेण विष्णुना कृतकर्मणः फलं जीवरूपेण श्रीरामेण भुक्तमित्यङ्गीकारे सेश्वरवादिनां मते अकृताभ्यागमस्य दोषत्वव्यवहारानिर्मूलत्वापत्तेश्च ।

किञ्च तत्कल्पनस्यैकेनार्जितं सुकृतं दुष्कृतं वान्यस्मै फलं प्रयच्छतीत्यर्थे पर्यवसानेन सुकृतदुष्कृतार्जयितुरेव तत्फलभोक्तृत्वाभिधायकसकलशास्त्रोपरोधापत्तेः । अत एवाप्पय्यदीक्षितैरसिद्धान्तलेशसङ्ग्रहे श्रीरामस्य तमस्वित्वदुःखसंसर्गादिकं कथञ्चित् भृगुशापसत्यत्वं प्रत्याययितुं नटस्येवाभिनयमात्रमेवेति कण्ठरवेणोक्तम् । प्रदर्शिता च प्रागेव तदुक्तिः । बालकाण्डे चायमर्थः स्फुटं दर्शितः । तत्र हि आत्मानं चतुर्धा विभज्य रावणवधाय दशरथपुत्रत्वं प्राप्नुहीति देवैः प्रार्थितो विष्णुस्तथैव कर्तुं प्रतिज्ञाय तदनन्तरं दशरथपुत्रो भूत्वा रावणं हनिष्यामीति समचिन्तयत् ।

तदनन्तरम्—

"ततो नारायणो विष्णुर्नियुक्तस्सुरसत्तमैः ।
जानन्नपि सुरानेवं श्लक्ष्णं वचनमब्रवीत् ॥
उपायः को वधे तस्य राक्षसाधिपतेस्सुराः ।
यमहं तं समास्थाय निहन्यामृषिकण्टकम् ॥"

इति भगवता पृष्टे ते प्रति—

"मानुषीं तनुमास्थाय रावणं जहि संयुगे" ॥ इति

देवाः पूर्वोक्तमेवोक्तवन्तः । अत्र सर्वज्ञत्वादादौ स्वेन देवानां वधता च रावणवधोपायं सम्यग्जानन्नपि विष्णुस्तमुपायं पुनः पृष्टवानि-त्यस्य, श्रीरामलक्ष्मणादिचतुरात्मनावस्थानसमये सर्वं सम्यग्जानन्नपि अजानन्निव चरिष्यामि, तादृशे मय्यज्ञत्वशङ्का न कार्या, भाविनीं वृत्तिमधुनैवारभ्य पश्यतेति देवान् बोधयितुं भगवान् भाविनीं वृत्तिमभिनीय दर्शितवानिति तात्पर्यमित्यभिहितम् ।

पाद्मपुराणोमासंहितायाम्—

"जानन्नपि सुरानेव विष्णुर्वचनमब्रवीत् ।
उपायः को वधे तस्य राक्षसाधिपतेस्सुराः ॥
श्रीमद्रामावतारेष्वज्ञवत्क्रियते मया ।
तत्र शङ्का न कर्तव्या सर्वज्ञेनापि पृच्छ्यते ॥
इति द्योतयितुं विष्णुस्समपृच्छन्मरुद्गणान्"। इति ।

श्रीमद्रामावतारेषु रामलक्ष्मणाद्यवतारेषु चतुर्षु सत्सु, तच्चात्मनाव-स्थानसमय इति भावः । अथ वा श्रीमद्रामावतारेषु कल्पे कल्पे रामा-वतारस्य सिद्धत्वेन तत्तत्कल्पीयसकलरामावतारेषु सत्सु यदा यदा श्रीराम-रूपेणावस्थानं तदा तदेति भावः । सर्वज्ञेनापि पृच्छ्यते सर्वज्ञत्वेन सर्वैरपि विदितेन मया पृच्छ्यते । एवमेव श्रीरामरूप आचरिष्या-मीति भावः । एवञ्चात्र श्रीरामचरित्रोपक्रम एव श्रीरामेण प्रदर्शित-सर्वज्ञत्वाभावस्याभिनयरूपत्वप्रदर्शनेन तत्क्लेशादीनामप्यभिनयरूपत्वं सिद्ध-मेव । अज्ञानाभावे क्लेशकामक्रोधादिगन्धस्यापि प्रसक्त्यभावात् ।

भगवता देवान्प्रत्येवं बोधनञ्च श्रीरामरूपे त्वस्मिन् मानुषत्वबुद्धिरूपावमानं कृत्वा निरवधिकदुर्गतिं देवाः प्राप्नुवन्तीत्येतदर्थं श्रीनारायणस्यावतारे मानुषत्वबुद्धिरूपावमानं कर्तुस्सकलसुकृतनाशो निरवधिकदुर्गतिश्च भवतीत्युक्तम् "अवजानन्ति मां मूढा" इत्यादिभगवद्गीतावचने तद्भाष्ये च । सह भाष्येण तद्वचनं प्रदर्शितञ्च । भागवते चायमर्थः स्फुटं दर्शितः पञ्चमस्कन्धे एकोनविंशेऽध्याये—

"मर्त्यावतारस्त्विह मर्त्यशिक्षणं रक्षोवधायैव न केवलं विभोः ।
कुतोऽन्यथा स्यू रमतः स्व आत्मनस्सीताकृतानि व्यसनानीश्वरस्य ॥

न वै स आत्मात्मवतां सुहृत्तमस्सक्तस्त्रिलोक्यां भगवान् वासुदेवः ।
न स्त्रीकृतं कश्मलमश्नुवीत न लक्ष्मणञ्चापि विहातुमर्हति" ॥

इति हनुमद्वाक्यसन्दर्भे इदं वचनद्वयं व्याख्यातं श्रीधराचार्यैः— "विभोर्मर्त्यावतारस्तु रक्षसो रावणस्य वधाय तस्य मनुष्यादन्यतोऽवध्यत्वात् । न केवलमेतावत् किन्त्विह संसारे स्त्रीसङ्गादिकृतं दुःखं दुर्वारमिति । मर्त्यानां शिक्षणञ्च शिक्षार्थमपीत्यर्थः । अन्यथा स्वे स्वरूपे रममाणस्य जगदात्मनस्सीताविरहकृतानि व्यसनानि कुतः स्युः । विपर्यासतत्त्वभावेन व्यसनानर्हत्वमुपपादयति । न वै स भगवान् त्रिलोक्यां क्वापि, न सक्तः । आत्मवतां धीराणामात्मा सुहृत्तमश्च । अतो न स्त्रीकृतं मोहं प्राप्नुयात् न लक्ष्मणञ्चेति लक्ष्मणत्यागश्च न युज्यत इत्यर्थः" इति । अत्र सर्वगतत्व-सर्वाधिष्ठानार्थकेन योगरूढिभ्यां नारायणपरवासुदेवशब्देन श्रीराममभिधाय श्रीरामरूपे वासुदेवे विभोरिति सर्वात्मत्वोक्त्या रमतः स्व इति नित्यमुक्तत्व-प्रदर्शनेन आत्मन इति सर्वेषामात्मरूपत्वोक्त्या ईश्वरस्येति सर्वेश्वरत्वोक्त्या आत्मात्मवतामिति आत्मवतां निगृहीतान्तःकरणानां विरक्तानामात्मेत्युक्त्या भगवानिति समग्रैश्वर्यादिशालित्वोक्त्या च तस्य श्रीरामरूपवासुदेवस्य सकलप्रपञ्चे क्वाप्यासक्तिरहिततायास्सकलसुहृत्तमतायाश्च निरवधिकहृदी-मुक्तत्वं विशदीकृतम् । एवम्भूतश्रीरामरूपो वासुदेवः प्रपञ्चे क्वचिदप्या-सक्तिरहितः कथं निरवधिकाधानुरं इव सीतावियोगकृतव्यसनानि प्राप्नुयात् । कथं वा सर्वसुहृत्तमो निर्घृण इव लक्ष्मणं सलिमत्यन्तमकमुरत्सृजेत् ।

शिबिचक्रवर्ती केवलमानुषोऽपि स्वशरणागतकपोतरक्षणाय स्ववपुरप्यङ्गीकृतवान् । अत एवंविधः परमात्मा रावणवधाय मनुजाकारं श्रीरामरूपं प्राप्त. निरवधिकृपानिधिर्वासुदेवः पत्नीपुत्रवित्तगृहादिष्वासक्तानां मर्त्यानामनीव योगसिद्धानामपरिमितदुःखमकार्यकरणञ्चानिवार्यमेव । सर्वेश्वरोऽप्ययं विषयसंङ्गवशादनीव दुःखं प्राप्तवान् लक्ष्मणत्यागरूपमकार्यकरणञ्च कृतवानतस्सङ्गो यथा न भवेत्तथाचरतेति मर्त्यशिक्षणायैव नट इव तमखिलदुःखसंसर्गाद्यभिनयं कृतवानित्यर्थो विस्पष्ट एव । सङ्गदोष उक्तो विष्णुपुराणे—

> "निःसङ्गतां मुक्तिपदं यतीनां सङ्गादशेषाः प्रभवन्ति दोषाः ।
> आरूढयोगोऽपि निपात्यते यस्सङ्गेन योगी किमुताल्पसिद्धिः ?" ॥

इत्यादिना विष्ण्ववतारानां सर्वेषामुपरत्यज्ञानादिकमभिनयरूपमेवेत्येतद्विस्पष्टं दर्शितम् । ब्रह्मतर्कस्तवेऽप्पय्यदीक्षितैरुदाहृतपुराणवचनसन्दर्भे सोऽयं सन्दर्भः—

> "स्त्रीपुंमलानुषङ्गात्मा देहो नास्य विजायते ।
> किन्तु निर्दोषचैतन्यसुखात्मिस्यौ स्वकां तनुम् ॥
>
> प्रकाशयति सैवेयं अभिविष्णोर्न चापरा ।
> तथाप्यसुरमोहार्थं परेषामेव कांचन् कचित् ॥
>
> दुःखाज्ञानप्रमादांश्च दर्शयेच्छुद्धसद्गुणः ।
> क प्राणानि· क चाज्ञानं स्वातन्त्र्याचिन्त्यसद्गुणे ॥
>
> दौर्लभ्यायैव मोक्षस्य दर्शयेतान्यजो हरिः ।
> कृष्णोऽप्यत्यक्तदेहोऽपि त्यक्तदेहस्य देहवत् ॥
>
> लोकानां दर्शयामास स्वरूपसदृशाकृतिम् ।" ॥ इति ॥

अत्र तेषां दुःखाज्ञानादेरभिनयरूपत्वं स्फुटं दर्शितम् । दौर्लभ्यायैव मोक्षस्येति । विष्ण्ववतारेषु विष्णौ च जीवेष्विव दुःखाज्ञानादिकमस्त्येव नाभिनयरूपमिति भगवद्वञ्चाकर्तुर्मुक्तिर्दुर्लभेत्यर्थः ॥

भगवद्गीतास्वप्ययमर्थः स्फुटं दर्शितः ।

तत्र चतुर्थाध्याये—

"बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥ (गी. ४-५)

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ (गी. ४-६)

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ (गी. ४-७)

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ (गी. ४-८)

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन" ॥
(गी. ४-९) इति ॥

अत्र ईश्वरस्तत्रैवात्ममायया सम्भवामीत्यनेन, साधूनां रक्षणाय दुष्कृतां नाशाय धर्मसंस्थापनाय युगे युगे सम्भवामीत्यनेन साधुरक्षणादिरूपं दिव्यमेव भगवतो जन्म कर्म चेति यो वेत्ति स मुक्तिमेतीत्यनेन चोक्तार्थस्य विशदत्वात् । एतत्सन्दर्भमध्ये च विष्णुपुराणे पञ्चमेंऽशे द्वाविंशाध्याये श्रीकृष्णस्य जरासन्धानीकेन युद्धमभूदित्यभिधायाभिहितम्—

"मनुष्यधर्मशीलस्य लीला सा जगतः पतेः ।
अस्त्राण्यनेकरूपाणि यदरातिषु मुञ्चति ॥

मनसैव जगत्सृष्टिं संहारञ्च करोति यः ।
तस्यारिपक्षक्षपणे कियानुद्यमविस्तरः ॥

तथापि यो मनुष्याणां धर्मस्तमनुवर्तते ।
कुर्वन् बलवता सन्धिं हीनैर्युद्धं करोत्यसौ ॥

साम चोपप्रदानञ्च तथा भेदप्रदर्शनम् ।
करोति दण्डपातञ्च क्वचिदेव पलायनम् ॥

मनुष्यदेहिनाञ्चेष्टामित्येवमनुवर्तते ।
लीला जगत्पतेस्तस्य छन्दतस्सम्प्रवर्तते" ॥

इत्यस्मिन् सन्दर्भे लीलेति छन्दतस्संप्रवर्तत इत्यादिनोपदर्शितार्थं कण्ठरवेणोक्त । उक्तन्यायेन ताडचत्वमेधत्वपलायमानत्वादिनिकृष्टत्वं सर्वं स्वेच्छयाङ्गीकृताभिनयरूपमेवेति सिद्धत्वेन न्यायसाम्यात् विष्ण्ववताराणां सर्वेषां विष्णुत्वेन शिवावताराणां सर्वेषां शिवत्वेन विष्णुशिवयोस्सर्वेश्वरत्वेन च तदवताराणां सर्वेषां सर्वेश्वरत्वं समानमेवेति सिद्धम् । तथा च विष्णुशिवमूर्त्योस्तयोरवतारमूर्तीनां सर्वासां बिम्बचैतन्यरूपस्य सर्वान्तर्यामिणः परमात्मन एकस्यैव मूर्तित्वेन मूर्तिरूपाणां विष्णुशिवतदवताराणां सर्वेषामीश्वरकोटित्वेन सिद्धानां ज्ञानबलैश्वर्यादिकं समानमेवेत्येतत्सिद्धमेव ।

ननु ईश्वरकोटितत्तन्मूर्त्यवच्छेदेनेश्वरचैतन्यस्य नानात्वं किं न स्यात् ? मूर्तिरूपावच्छेदकभेदस्य सिद्धत्वात् । प्रतिशरीरं जीवचैतन्यभेदस्यानुभूयमानत्वादिति चेन्न । सर्वज्ञत्वादिविशिष्टेश्वरचैतन्यस्य प्रतिमूर्ति भिन्नत्वे ईश्वरचैतन्यरूपेणैक्याभावेन जीवनानात्ववत् सर्वेश्वराणां नानात्वमनिवार्यमिति प्रागनुक्तदोषस्यात्राप्युपपत्तेर्विष्णुशिवयोस्तदवताराणां रामकृष्णनृसिंहादीनां सर्वात्मत्वसर्वान्तर्यामित्वादेस्सिद्धत्वेन तेषां सर्वेश्वरतायास्सिद्धत्वात् सर्वेश्वरत्वेन सिद्धानां दौर्बल्यपराधीनत्वादेर्दूषणपरम्पराविधानेन निरस्तत्वात् । विष्णुशिवौ विनेतरेषां परिच्छिन्नत्वपक्षो वा तयोरन्यतरस्यैव परिच्छिन्नत्वपक्षो वा सर्वेषां परिच्छिन्नत्वपक्षो वा न सम्भवत्येव । परिच्छिन्नानां तेषामीश्वरत्वासम्भवेन जीवत्वापत्तेः । विष्णुशिवयोस्तदवताराणां रामकृष्णादीनां जीवत्वासम्भवस्य दर्शितत्वात् । सर्वेषां परिच्छिन्नत्वाभिप्रायकवचनविरोधाच्च । विष्णुशिवयोरेवापरिच्छिन्नत्वपक्षे उभयोरपि सर्वेश्वरत्वेनोक्तेश्वरनानात्वदोषस्यानिवृत्तत्वाच्च ।

एतेन विष्ण्ववतारास्सर्वे विष्ण्वभिन्ना एव । शिवावतारास्सर्वे शिवाभिन्ना एवेत्यङ्गीकृत्य विष्णुशिवयोर्धर्मिधर्मभावकल्पने धर्मरूपस्य

धर्मापेक्षया दौर्बल्यं धर्म्यधीनत्वं च सम्भवति । एतादृशेश्वरनानात्वस्य दोषत्वाभावादित्यन्तिरस्तम् । विष्णुशिवयोरुभयोरप्यपरिच्छिन्नत्वसर्वकारणत्वसर्वात्मत्वसर्वान्तर्यामित्वसर्वाधिष्ठानत्वाद्यभिधायकवचनविरुद्धार्थकल्पनस्यातिमूढानामप्ययुक्तत्वात् । विष्णुशिवयोस्सर्वान्तर्यामित्वसर्वाधिष्ठानत्वादौ समाने तयोरन्यतरस्य धर्मत्वरूपोपसर्जनत्वासम्भवात् । ईश्वरस्य सत कस्मादपि दौर्बल्यं परतन्त्रत्वादिकं च न सम्भवतीति प्रागेवोक्तत्वात् । तयोस्समानतयैव सर्वेश्वरत्वनिर्णायकबहुश्रुतिवचनविरुद्धानां तयोश्शक्तिशक्तिमद्भावरूपधर्मधर्मिभावबोधकानां पुराणादिवचनानां स्वार्थे प्रामाण्यासम्भवेन तत्तदुपासनासु रुच्युत्पादनाय नहिनिन्दान्यायेन तत्तत्स्तुतावेव तात्पर्यम् । अन्यथा शक्तिविरोधाधिकरणन्यायेन तेषामप्रामाण्यापत्तेः । अत ईश्वरकोटिप्रविष्टानां विष्णुशिवप्रभृतीनां सर्वेषां परिच्छिन्नत्वमपरिच्छिन्नचिन्मात्रचैतन्यरूपेणैक्यञ्चाभिन्नत्वञ्चाङ्गीकर्तव्यमेव । शैवानां मते कदाचित् गौरी नवकोटिरूपाणि धृतवती शिवश्च तावन्ति रूपाणि धृत्वा तस्याः पतिरभवदित्युक्तम् । वराहपुराणे त्रिकलोपाख्याने तदुदाहृतं नामाप्पय्यदीक्षितैरिति तन्नवकोटिरूपैस्सहस्रशीर्षादित्युक्तव्यक्तमूर्तिरूपेण पञ्चवक्त्रसदाशिवमूर्तिरूपेण एकवक्त्रदक्षिणामूर्तिसोमस्कन्दरूपेण चरममूर्तिलिङ्गमूर्त्यादिरूपेण च शिवस्य भेदे यद्यपि केनचित्सर्वज्ञत्वादिरूपेणाभिन्नत्वमिव, वैष्णवमते कदाचित् महालक्ष्मीरष्टादशकोटिरूपाणि धृतवती विष्णुश्च तावन्ति रूपाणि धृत्वा तस्याः पतिरभवदिति वराहपुराणे अप्पय्यदीक्षितैरुदाहृतत्रिकलोपाख्यान एवोक्तमिति तदष्टादशकोटिरूपैस्सहस्रशीर्षादित्युक्तरूपशुद्धस्फटिकसङ्काशवासुदेवमूर्तिरूपेण बदर्याश्रमीनरनारायणमूर्तिरूपेण नीलमेघश्यामविष्णुरूपेण श्रीरामकृष्णनृसिंहाद्यवताररूपेण षोडशसहस्रस्त्रीपाणिग्रहणार्थं श्रीकृष्णेन धृतषोडशसहस्ररूपैश्च विष्णोर्भेदे सत्यपि केनचित्सर्वज्ञत्वादिविशिष्टरूपेणाभिन्नत्वमिव च विष्णुशिवब्रह्मादिरूपैस्सर्वेश्वरस्य भेदे सत्यपि सर्वज्ञत्वादिविशिष्टचिन्मयचैतन्यात्मकसर्वान्तर्यामिरूपेण ह्यभिन्नत्वं न्याय्यमेव ॥

विनैव प्रयासलेशं सङ्कल्पमात्रेण लीलयैव वाचा वक्तुमशक्यातिविचित्ररचनात्मकाकाशादिसकलजगत्सृष्टिस्थितिलयान् युगपत् एकदैव

सनस्सर्वान्तर्यामिरूपेण स्थावरजङ्गमात्मकासङ्ख्यातप्राणिकोटिमनोवाक्चक्षुः श्रोत्रादीन्द्रियाणि : ·· विलक्षणं व्यवहारं प्रेरयतोऽचिन्त्याद्भुतानन्तशक्तेर्बिम्बचैतन्यरूपपरमात्मन ईश्वरकोटिप्रविष्टेषु विष्णुशिवतदवतारात्मकेष्वयुतकोटिरूपेष्वप्यहमहमिति अयुतकोटिविलक्षणतया व्यवहर्तुं सामर्थ्यं कैमुतिकन्यायसिद्धमेव ।

किञ्च "अन्तस्तद्धर्मोपदेशा"दित्यधिकरणे सकलचराचरान्तर्याम्येव आदित्येऽक्षिणि च श्रूयमाणहिरण्मयपुरुष इत्यभिधानेन तस्य च स एवान्तर्यामी आदित्याद्यन्तर्गतहिरण्यमूर्तिद्वयेऽहमिति व्यवहर्तेति पर्यवसानेन न्यायसाम्यादीश्वरकोटिमूर्तिषु सर्वास्वप्यहमिति व्यवहर्ता ॥ एवान्तर्यामीति सिद्धमेव ।

एतेन च यस्य क्वचिदपकर्षः श्रूयते न तस्य सर्वेश्वरत्वं सम्भवतीति मूर्खप्रलापो दूरीकृतः । तस्मिन्नेवाधिकरणे हिरण्मयपुरुषयोर्मर्यादावदैश्वर्यरूपनिकर्षसत्त्वेऽपि तयोस्सर्वेश्वरत्वनिर्धारणात् । विष्णुस्सर्वोत्कृष्टः, शिवादीनां विष्णुसाम्यमित्यभिदधानाः पाषण्डिनः इत्यभिधायकानां, शिवस्सर्वोत्कृष्टः, विष्ण्वादीनां शिवसाम्यमित्यभिदधानाः पाषण्डिन इत्यभिधायकानाञ्च वचनानां परस्परविरुद्धानां उपासने रुच्युत्पादनाय नहिनिन्दान्यायेन विष्णुशिवस्तुतावेव तात्पर्यम् । नेतरनिन्दायामपि । उभयत्र तात्पर्यकल्पने वाक्यभेदापत्तेः । तयोस्सर्वेश्वरत्वादिना साम्यप्रतिपादकबहुश्रुतिविरुद्धतया विरोधाधिकरणन्यायेनाप्रामाण्यापत्तेश्च ।

तस्माच्छ्रीमूर्तिरूपविष्णुशिवयोस्तदवताराणां श्रीरामकृष्णनृसिंहादीनाञ्चेश्वरकोटिप्रविष्टानां सर्वेषां सर्वज्ञत्वादिविशिष्टबिम्बचैतन्यरूपत्वं तेन रूपेणैक्यम्, अत एव सर्वेषां ज्ञानबलैश्वर्यादिकल्याणगुणैस्सर्वैस्साम्यञ्च सिद्धमेवेति सर्वं सुस्थम् ।

यतो हरिहराद्वैतविज्ञानादसुखं नृणाम् ।
सुखाय तद्द्वयाभिन्नं राममेव सदा श्रये ॥
सदानन्दस्वरूपो यस्सर्वकर्ता जगत्पतिः ।
विष्ण्वीशानादिरूपेण सर्वोपास्योऽखिलेश्वरः ॥

यस्सकृन्नतरक्षायां जागरूकः कृपानिधिः ।
सोऽस्मान् रक्षतु सीतायाः पती रामः परात्परः ॥

स्वस्मिन्नेव दृढां भक्तिं सर्वाभीष्टप्रदायिनीम् ।
प्रयच्छेत्सेवितां सर्वैः ब्रह्माद्यैस्सर्वभूयसीम् ॥

यत्कृपालवतो ज्ञातो मया रामसुखाम्बुधिः ।
तं देशिकवरं वन्दे ख्यातं विश्वाधिकं शुभम् ॥

हरेर्हरस्य चाद्वैतभूषणाख्योऽयमुत्तमः ।
ग्रन्थो भूयात्सदा प्रीत्यै श्रीरामस्य कृपाम्बुधेः ॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वाधिक-
सरस्वतीचरणशिष्यश्रीमद्बोधेन्द्रसरस्वतीकृतिषु
हरिहराद्वैतभूषणे हरिहरयोरद्वैतनिरूपणं
नाम तृतीयो भागः ॥

---

॥ हरिहराद्वैतभूषणं समाप्तम् ॥

---

॥ शुभमस्तु ॥

॥ श्रीरस्तु ॥

# ॥ हरिहराद्वैतभूषणकारिका ॥

॥ श्रीमद्बोधेन्द्रसरस्वतीकृता ॥

## प्रथमो भागः

परानन्दं जगन्नाथं राममेव सदाश्रये ।
शङ्करप्रपन्नसन्त्राणे जागरूकं कृपानिधिम् ॥ १ ॥

साम्बं सदाशिवं विघ्नराजं देवीं सरस्वतीम् ।
विश्वाधिकगुरूंश्चाहं वन्देऽभीष्टार्थसिद्धये ॥ २ ॥

शिवनारायणाभेदभूषा विद्वदभीप्सिता ।
श्रीरामकृपयैवेयं रच्यते न्यायरूपिणी ॥ ३ ॥

महोपनिषदि स्पष्टं विष्णोस्सर्वेशतोच्यते ।
नारायणः परं ब्रह्म लक्षणा ह्यन्यथा भवेत् ॥ ४ ॥

पूर्वोत्तरविरोधाच्च बहुलिङ्गानुसारतः ।
उपक्रमविरोधाच्च कथ्यते न तदन्यथा ॥ ५ ॥

शिखायां परमात्मा च नारायण इहोच्यते ।
आत्मा नारायणेत्येतत्पूर्ववाक्यानुसारतः ॥ ६ ॥

पूर्वोत्तरविरोधाच्च ह्यत्र क्रमानुसारतः ।
महत्त्वाभ्यासतश्चात्र ह्युपक्रमाविरोधतः ॥ ७ ॥

उपक्रमे स्पष्टतास्य ह्युपसंहारके हरेः ।
परमात्मत्वमेवोक्तं सुष्ठीशत्वस्य बोधकम् ॥ ८ ॥

अभ्यासापूर्वते स्पष्टे फलमप्यर्थवादकः ।
सृष्टिबोधकसन्दर्भो बह्व्यस्त्वत्रोपपत्तयः ॥ ९ ॥

अतस्सर्वेशता विष्णौ वरत्वञ्चापि सिद्ध्यति ।
तात्पर्यलिङ्गबलाच्च बहुत्वाद्वालितेष्यते ॥ १० ॥

श्रुतीनाश्च पुराणानां विष्णोरीशत्वबोधने ।
अनीशत्वस्फोरकाणां दौर्बल्यादन्यथा गतिः ॥ ११ ॥

अनीशत्वं शिवस्यैव बह्वीभिः श्रुतिभिर्भवेत् ।
सर्वान्तर्यामिरूपस्य मूर्तिरूपस्य च श्रुतौ ॥ १२ ॥

विष्णोस्तुरीयता स्पष्टा पुराणेष्वपि सा तथा ।
शिवमूर्तौ तुरीयत्वं न श्रुतौ क्वापि भण्यते ॥ १३ ॥

अतोऽपीशे ह्यनीशत्वमनिवार्यं प्रसज्यते ।
शिरवाया हि तुरीयत्वं बिम्बरूपस्य बोध्यते ॥ १४ ॥

शिरस्यपि तथैवोक्तं तस्य सर्वात्मता यतः ।
जरतीयप्रसङ्गः स्याद्वाक्यभेदप्रसङ्गतः ॥ १५ ॥

अन्तर्यामिपरत्वाच्च कैवल्येऽपीष्यतां तथा ।
जरतीयन्यायवाक्यभेदौ द्वौ तत्र वै समौ ॥ १६ ॥

सन्दंशन्यायबाधाच्च ज्ञेयब्रह्मपरत्वतः ।
वस्तुतो बिम्बरूपेण ह्यभिन्नौ शिवकेशवौ ॥ १७ ॥

तयोरीश्वरतोपात्तसिद्ध्येऽन्यत्समीर्यते ।
अतोऽस्य सिद्धमीशत्वमीशत्वान्न हि कार्यता ॥ १८ ॥

ईशानादित्वसिद्धान्तभङ्गदोषः प्रसज्यते ।
उत्पत्त्यमन्यवाचीति न्यायबाधो हि निश्चलः ॥ १९ ॥

किञ्च जीवत्वमेव स्यात्पराधीनत्वकल्पने ।
दौर्बल्यकल्पनेऽपि स्याज्जीवस्यापीशतुल्यता ॥ २० ॥

आवृतास्तीति निर्णीतं भाष्ये चेशस्य का कथा ।
आवृतत्वे त्वविद्यायास्स्यादतोऽनादितोऽथ वा ॥ २१ ॥

आद्ये तस्यामविद्यायामज्ञानज्ञानयोस्तथा ।
बन्धेऽनादित्वभङ्गो मुक्तेश्च स्यादनित्यता ॥ २२ ॥

तद्द्वारा व्यर्थता च स्याद्द्वितीयेऽन्यद्द्वयं भवेत् ।
किञ्च कर्मवशोत्पत्त्या जीवतैव प्रसज्यते ॥ २३ ॥

जीवत्वञ्च न तस्य स्यात्तात्पर्येण शनोक्तितः ।
अन्योन्याश्रयदोषाच्च विश्वेशो जनको हरेः ॥ २४ ॥

इत्युक्तेऽपि न हेतुरस्यादीशेऽपि हरिनिर्मिते ।
जीवत्वासम्भवाद्विष्णोः कृष्णाद्यावीरितं हरौ ॥ २५ ॥

बिम्बरूपे भवेदेव यतस्तस्यैव कर्तृता ।
हरिः कर्ता कारणं तु शिव एवेति निर्णयः ॥ २६ ॥

अपहारको हि सर्वेषां मृत्युतेशो भवेद्धरिः ।
जगत्कर्ता शिवो नैवं यतस्तस्य न कर्तृता । २७ ॥

बिम्बत्वेनान्यरूपेण ह्यभेदः शिवकृष्णयोः ।
दीक्षितैरीरितस्तस्मादन्यश्चेत्तन्न सङ्गतः ॥ २८ ॥

सर्वेषाञ्च बलापत्तेर्विश्वरूपप्रदर्शने ।
उमादृष्टान्तवैयर्थ्यं कृतं योगं विहाय च ॥ २९ ॥

स्वदुक्ताभिन्नताया हि साधनत्वप्रकल्पनम् ।
तेषामत्रैव तात्पर्यं वैदिकत्वेन संमता ॥ ३० ॥

सिद्धान्तसङ्ग्रहेऽप्युक्तमपि चोत्पत्तिकल्पनम् ।
स्वाभिधानविरुद्धं हि किञ्चास्य जनिकल्पने । ३१ ॥

स्वारस्यहानिर्वाक्यस्य ह्यध्याहारः प्रसज्यते ।
एकशब्दव्यर्थता च ह्येकाकीति गिरस्तथा ॥ ३२ ॥

न रमेतेति वाक्यस्य चोपरोधः प्रसज्यते ।
किञ्च नारायणस्यात्र ह्यादिकारणतोच्छेदने ॥ ३३ ॥

सा मूर्तिरूपेणैव स्यादनुस्यूतेरभावतः ।
बिम्बस्य तत्र हेतुत्वं तस्यानुस्यूतता यतः ॥ ३४ ॥

घटेऽनुस्यूतिनियमो भावप्रमादिके स्फुटः ।
यस्योपादानता तस्य निमित्तत्वं हि वैदिकम् ॥ ३५ ॥

अतो निमित्तमात्रत्वमपि मूर्तेरसम्भवि ।
किञ्च बिम्बात्मत्वेन स्थितदेहेन हेतुता ॥ ३६ ॥

तादात्म्यादुपादानहेतावेकीभावं गतस्य हि ।
निमित्तत्वं न प्रसिद्धं किञ्चामूर्तस्य हीशितुः ॥ ३७ ॥

प्रतिबिम्बो यतो जीवस्तस्मात्प्रेति श्रुतेरपि ।
अमूर्तत्वं जगत्कर्तुःसिद्धं किञ्चाखिलेशितुः ॥ ३८ ॥

सृष्टेरनन्तरं पूर्वमन्यभावश्रुतेरिदम् ।
अनङ्गत्वं शरीरत्वात् करादावयवित्वतः ॥ ३९ ॥

साकारत्वं तत उत्पत्तिर्मायिकस्य तथा ध्रुवम् ।
अप्राकृतत्वं तन्मूर्तेर्नैव सिद्ध्येत्कथञ्चन ॥ ४० ॥

अभौतिकं मायिकं यत्तदप्राकृतमीर्यते ।
पुराणादावतो मूर्तेः प्रागभाववचनाद्भवेत् ॥ ४१ ॥

वैयर्थ्यं जनिवाक्यस्य निषेधवचनस्य च ।
वाक्यद्वयस्य वैयर्थ्यादेकस्मिन् लक्षणा वरा ॥ ४२ ॥

श्रुत्या लिङ्गेन सर्वेशादन्यो नैवेह पठ्यते ।
उमासहायवाक्योक्तमूर्तिस्त्र्यक्षगिरोच्यते ॥ ४३ ॥

नो चेत्स्यादुक्तवैयर्थ्यं बाधाभावाल्लघुत्वतः ।
त्रिलोचनत्वेश्वरत्वप्रत्यभिज्ञानतस्तथा ॥ ४४ ॥

पुराणवचसाप्येवं त्र्यक्षश्रुत्येकवाक्यता ।
नो चेच्छ्रुतिविरोधेन तेषां स्यादप्रमाणता ॥ ४५ ॥

किञ्चाथर्वशिखावाक्ये जन्मुक्तेर्हरिरुद्रयोः ।
सर्वेशयोस्तन्वभावः सृष्टेः प्राक् सिद्ध एव हि ॥ ४६ ॥

सिद्धं हरेरीशतात्र विष्णुशब्दचतुष्टयात् ।
सर्वध्यात्रात्मकत्वोक्ते रुद्रस्यापीशता स्थिरा ॥ ४७ ॥

जनिवाक्यं दुर्बलत्वाच्चयोर्नेशत्वबाधकम् ।
उमासहायादिवाक्यैरतयोर्योधितवर्ष्मणाम् ॥ ४८ ॥

शरीरत्वादिना सिद्धं जन्यत्वं सृष्टितः परम् ।
जनिवाक्यानुसारेण मूर्तिवाक्याविरोधतः ॥ ४९ ॥

ब्रह्माण्डहेतुमूर्तेश्च खादिसृष्टेः परत्वतः ।
खादिहेतुशरीरं किं सत्त्वं स्वपरिणामकम् ॥ ५० ॥

अपरिच्छिन्नमथ वा नाद्यः कार्यप्रदेशके ।
सर्वत्र तदभावाच्च बहुत्वे त्वतिगौरवात् ॥ ५१ ॥

बहुविग्रहसृष्टेश्च खादिसृष्टेस्तुलाघवात् ।
न द्वितीयो न तृतीय उक्तदोषसमत्वतः ॥ ५२ ॥

हेतुतावच्छेदकं तु मूर्तित्वादिसृजौ समम् ।
अतस्सृष्टेः पुरा मूर्तिप्रत्यायकगिरां परा ॥ ५३ ॥

निम्नचैतन्यपरता लक्षणाश्रयणेन हि ।
रुद्रशब्दोक्तमूर्तिर्या सैव शम्भुरिहोदिता ॥ ५४ ॥

एवञ्च सृष्टेः प्राङ्मूर्तौ मानाभावो हि सुस्थिरः ।
अपि चात्रोत्पन्नमूर्तेरुपास्यत्वाभिधानतः ॥ ५५ ॥

अन्यतोपास्यमूर्तीनामुत्पन्नानामुपास्यता ।
सिद्धेशानो मूर्त्यभावः प्रागुक्तसिद्ध एव हि ॥ ५६ ॥

किञ्च षाड्गुण्यविश्रुत्या वक्त्रीणा मिलिनोक्तिवत् ।
जगोपासितपरश्रुत्या सृष्ट्यनन्तरजन्यता ॥ ५७ ॥

सर्वासामपि मूर्तीनामन सृष्टेः पुरेशितुः ।
सिद्धं हि मूर्तिराहित्यं किञ्च-शब्दादिषड्भके ॥ ५८ ॥

एकैकहीनजन्यत्वं भूतानां नियतं ततः ।
शब्दैकगुणकाकाशे शब्दहीनात्मजन्यता ॥ ५९ ॥

ध्रुवेति न्यायतश्शब्द इत्यादिश्रुतिभिस्तथा ।
मूर्तौ शब्दादिराहित्यासम्भवात्परमेश्वरे ॥ ६० ॥

सर्वगन्धादिवाक्यानां जन्यमूर्तिपरत्वतः ।
सिद्धं हि मूर्तिराहित्यमपि चाकाशकारणम् ॥ ६१ ॥

स्वान्तर्यामीति विस्पष्टं श्रुतावात्मेति शब्दतः ।
प्रत्यभिज्ञायमानत्वात्किञ्च मूर्तिप्रकल्पनम् ॥ ६२ ॥

सामर्थ्यसिद्धये तस्य सृष्टौ किं वा श्रुतेर्बलात् ।
सामर्थ्यं किमदेहस्य मानाभावादसम्भवि ॥ ६३ ॥

दृष्टान्तविग्रहाभावः श्रुत्यादौ कण्ठतोक्तितः ।
सर्वांशस्योपमाभावादेकदेशस्य सत्त्वनः ॥ ६४ ॥

न द्वितीयो बाधकल्पाद्वितीयश्च न सम्भवी ।
गिरां निष्फलतापत्तेः किञ्च मूर्तिबहुत्वतः ॥ ६५ ॥

एकस्या नैव हेतुत्वमस्या एवेत्यनिर्णयात् ।
वैलक्षण्यगिरां बाधो मूर्तीनामेकता यदि ॥ ६६ ॥

औपम्यञ्च निरुद्ध्येत न्यायानां बाध्यता भवेत् ।
बह्वीनां साधनत्वञ्चेदेका एवोपपत्तितः ॥ ६७ ॥

बहुमूर्तिश्रुतीनां स्याद्वैयर्थ्यं किञ्च सम्मते ।
उत्पन्नेष्वमूर्तीनाञ्चेदप्राकृततेष्यते ॥ ६८ ॥

दर्शितामूर्तवाक्यानां तदा स्यादनुवादता ।
तासां मायिकता चेत्स्यात्प्रतिषेधकता भवेत् ॥ ६९ ॥

तद्वाक्यानामतः पूर्वमीशस्यामूर्तता स्फुटा ।
किञ्चाप्राकृतदेहस्य मूर्तेर्मायिकतापि वा ॥ ७० ॥

किं वा मायिकतैव स्यादाद्येऽनादित्वमेव वा ।
अन्यत्वमपि जन्यत्वमात्रं चादिमपक्षके ॥ ७१ ॥

अनिश्श्रुतिस्मृतीनां स्यादप्रामाण्यं द्वितीयके ।
अन्यासां फलवाक्यैस्स्याज्जन्यं निष्फलं ध्रुवम् ॥ ७२ ॥

तृतीये जन्यमूर्तिस्सा कथमप्राकृता भवेत् ।
अन्यस्य मायिकत्वेन हत एवेतरौ गतौ ॥ ७३ ॥

अनिवाक्येषु चेद्दोषो वैयर्थ्यं हि प्रसज्यते ।
मूर्तिस्फोरकवाक्येषु सा नो चेत्तत्प्रसज्यते ॥ ७४ ॥

किञ्च मुक्तिं गतानाञ्च जीवानामशरीरता ।
सा नास्ति चेदीश्वरस्य निकृष्टत्वममुक्तता ॥ ७५ ॥

भोगमात्रेति सूत्रेण शारीरं सुखमीश्वरे ।
जीवेषु च समं सिद्धं जीवानामशरीरिणा ॥ ७६ ॥

अधिका स्यादीश्वरस्य तस्मात्सिद्धाशरीरता ।
अद्वैतदीपिकादौ च तथैव हि दृढीकृतम् ॥ ७७ ॥

निर्णीतमेतत्सुदृढं सूत्रभाष्येऽतिविस्तरात् ।
ईक्षतेरिति देहादिवदपीत्यत्र वै तथा ॥ ७८ ॥

कृत्स्नप्रसक्तिरित्यादौ श्रुतेरित्यात्मनीति च ।
सर्वापेक्षा चेति सूत्रे तथा विवरणादिके ॥ ७९ ॥

अमूर्तस्य ब्रह्मणो हि हेतुत्वं सम्यगीरितम् ।
हरेरतः कथं जन्म विश्वरूपस्य तद्भवेत् ॥ ८० ॥

श्रीशगौरीशयोस्साम्यं दीक्षितानां हि संमतम् ।
किञ्च श्रीशेशयोर्मूर्तिरूपयोस्सर्गतः पुरा ॥ ८१ ॥

अविद्यमानयोः कार्यकारणत्वं कथं भवेत् ।
निषेधाज्जनिवाक्याच्च फलाभावाज्जनेः पुरा ॥ ८२ ॥

असम्भवात्फलाभावात्तयोरपि तदिष्यताम् ।
किञ्चास्य जनिमत्वेऽत्र विरुध्येते विशेषणे ॥ ८३ ॥

अनन्तं शाश्वतमिति तैत्तिरीयेऽपि योज्यताम् ।
अशनिशंतिवाक्यानामनन्तत्वोपपादिनाम् ॥ ८४ ॥

सौवालानां व्यर्थता स्यान्निर्बीजत्वगिरां तथा ।
चतुर्दशानां स्यादेवं ह्यजत्वं वदतोस्तथा ॥ ८५ ॥

किञ्चोत्पत्तौ लयश्च स्यात्तयात्वे तस्य नित्यता ।
शाश्वताच्युतता चात्र ह्यनन्ताव्ययता तथा ॥ ८६ ॥

गदिता तैत्तिरीये च विरुध्येत स्फुट तथा ।
अजरामृततामस्य ह्यभयाशोकतां तथा ॥ ८७ ॥

अशनिविंशनिवाक्यानां वदतां ह्यनन्तताम् ।
सौबालानां दर्शितानां सर्वेषामुपरोधता ॥ ८८ ॥

नित्याव्ययत्वावध्यत्वे विरुध्येते तदीयके ।
नारायणश्रुतिप्रोक्ता द्विरुक्ता चापि नित्यता ॥ ८९ ॥

तदुक्तमव्ययत्वञ्च विरुध्येत तथैव हि ।
नन्वीशानस्य विम्बस्य विष्णोः श्रीमूर्तिरूपता ॥ ९० ॥

श्रूयते तत्र यत्प्रोक्तं तच्छिवे पर्यवस्यति ।
ऋषिणाप्येवमेवोक्तमिति चेत्तत्र गद्यते ॥ ९१ ॥

हरिणा निर्मिते हेतुर्न हरिस्त्यादितीरितम् ।
मद्वस्यममूर्तिश्च जीवमूर्तेर्जगत्कृतिः ॥ ९२ ॥

नास्तीति कारणत्वञ्च नेतीत्येतद्धि साम्प्रतम् ।
किन्तु प्रपञ्चे निगदिते चेतनेन त्रिनिर्मिते ॥ ९३ ॥

चेतनोऽन्यो न हेतुः स्यात् कुम्भकारपितुर्भुवि ।
बलिष्ठस्याप्यहेतुत्वान्नैपुणस्य घटं प्रति ॥ ९४ ॥

किञ्चोभयोर्हेतुतायामीश्वरानेकता भवेत् ।
किञ्चाभिन्ननिमित्तोपादानत्वमपि भज्यते ॥ ९५ ॥

अचेतनविशिष्टस्य हेतुत्वे न भवेत्किल ।
जगत्कारणनानात्वं चिच्चैतन्येन संयुता ॥ ९६ ॥

हेतुश्चेदापतत्येव हेतुनानात्वकल्मषः ।
किञ्चोत्पत्त्यादिहेतुत्वं हरेरङ्गितं यदि ॥ ९७ ॥

ईश्वरत्वासाधकं स्याज्जन्माद्यस्येति वै परा ।
न्यायास्सर्वेऽपि भज्येरन् किञ्च विश्वात्मना हरेः ॥ ९८ ॥

नित्यता च परेशत्वं विश्वतः परता तथा ।
शाश्वतक्षेमता तावदमनमङ्गता तथा ॥ ९९ ॥

परतत्त्वपरञ्ज्योति परमात्मत्वमेव च ।
सर्वव्यापकतानन्तविश्वशम्भुत्वमेव च १०० ॥

उच्यतेऽत्रेति तैरस्य यदीशत्वं न सिद्ध्यति ।
अन्तस्तेत्यादिसूत्राणां सर्वेषां भङ्ग एव हि ॥ १०१ ॥

बहुभिर्यदि नेशत्वं द्वित्रैस्तत्सिद्धमेव हि ।
अस्यानीशत्वगमकमस्ति चेत्तु तत्र च ॥ १०२ ॥

अस्येशत्वे [illegible] हरीरितं पुरा ।
किञ्च सर्गान्तरं हि मूर्तिरूपत्वमीरितम् ॥ १०३ ॥

सर्वव्यापकताचैतन्य विश्वरूपत्वमेव च ।
उक्तं तेन शिवं ! मुख्यसृष्टिकाऽस्य केवलम् ॥ १०४ ॥

बिम्बोपादानते सिद्धे नारायणगिरस्तथा ।
रूढयर्थत्यसादिर्हेतुर्यौगिकः स्वादिकारणम् ॥ १०५ ॥

स्थूलसूक्ष्मत्वभेदेन यदा पङ्कजमिष्यते ।
यौगिकत्वेन त्रिम्बत्व नामभाष्ये समीरितम् ॥ १०६ ॥

नारायणानुवाकोऽय हरेरीशत्वबोधक ।
इति शिष्टाग्रगण्याना तात्पर्यमवगम्यते ॥ १०७ ॥

किञ्च प्रपञ्चसृष्ट्यादिफलेऽनेनैव सिध्यति ।
अस्यान्यो जनकस्सोऽपि सर्वेश इति बोधने ॥ १०८ ॥

मानाभाव फलाभाव फलशून्यार्थबोधने ।
असम्भव्यर्थकथने न श्रुतेर्माव इष्यते ॥ १०९ ॥

तस्मादीशस्य नेशत्व युज्यते न हरेर्जनि ।
किञ्च पौराणवचनै श्रुतीना नयने तथा ॥ ११० ॥

विरोधन्यायबाध स्यादनारम्भो भवेत्किल ।
मीमासाया ब्रह्मणो हि पौराणिक्यस्ततो गिरः ॥ १११ ॥

उदाहृतास्शिवस्यैता ईशत्वस्यैव बोधिका ।
अपि चाथर्वशिरसि विष्णोरीशस्य जन्यता ॥ ११२ ॥

परत्वमेव युक्तं हि तद्विष्णौ पर्यवस्यति ।
हरेर्जनिवदीशस्याप्युत्पत्तिरतु समैव हि ॥ ११३ ॥

समं तयोस्तुरीयत्व पौराणि वचस्समा गिरः ।
शिवस्येशादिशब्दाश्चरेर्विष्ण्वादयस्समा ॥ ११४ ॥

विश्वम्भरादयश्शब्दाश्शङ्करेत्यादयस्समा ।
विश्वत. परमत्वञ्च विश्वाधिकत्वं सम तथा ॥ ११५ ॥

रुद्रशब्दैरितस्यैव जन्यतेशत्ववर्णनम् ।
नियामकं भवेदेव हरेरेवमभावत. ॥ ११६ ॥

वेदशास्त्रैरिति वचस्सौबालञ्च तथा भवेत् ।
किन्नेशस्य नियम्यत्व सुबालोक्तं तथा भवेत् ॥ ११७ ॥

शिवाभेदो हि दौर्बल्यसूचको न भवेद्धरेः ।
जननं जनकाद्विष्णोः भावल्यस्य हि सूचकम् ॥ ११८ ॥

किञ्च श्रुतौ मूर्तिरूपविष्णोरीशस्य वर्ण्यते ।
जननं न हरेरेव किञ्च विष्णोस्तुरीयता ॥ ११९ ॥

मोक्ता श्रुतौ नैव शम्भोस्तेनेशात् हरेर्भवेत् ।
चिन्मचैतन्यरूपत्वं सर्वेशत्वादिकं तथा ॥ १२० ॥

हरीशयोस्समं तस्माद्विष्णोर्विश्वेशता परा ।
महोपनिषदि व्यक्तं मोक्ता तात्पर्यपूर्वकम् ॥ १२१ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वाधिक-
सरस्वतीचरणशिष्यश्रीमद्बोधेन्द्रसरस्वतीकृतिषु
*हरिहराद्वैतभूषणकारिकायां हरिपारम्य-
निरूपणं नाम प्रथमो भागः ।*



## ॥ अथ द्वितीयो भागः ॥

अथर्वशिरसि स्पष्टं शम्भोरसर्वेशतोच्यते ।
शिवलोकोऽत्र विख्यातः सर्गलोकागिरोच्यते ॥ १२२ ॥

अन्यथा गौरवापत्तिर्नार्थनिर्धारणं भवेत् ।
शिवदर्शनमेवात्र गमनोद्देश्यमिष्यते ॥ १२३ ॥

त्रैकालिकेशविज्ञानं तत्सिद्ध्यर्थं प्रकल्प्यते ।
अन्यथा हरिति वाक्यस्य न प्रमाण्यं हि लभ्यते ॥ १२४ ॥

ब्रह्मविद्याधिकारित्वाद्देवानां हि विरक्तता ।
सिध्यत्यतो न भोगानां हर्षिर्गतिफलं भवेत् ॥ १२५ ॥

बहुभ्योऽपि द्वयस्यैव कल्पनं सर्वसंमतम् ।
धर्मिधर्मद्वयायुक्तं धर्मस्यैव च कल्पनम् ॥ १२६ ॥

किञ्चेशभोग्यविष्णुभ्यां वरमीशस्य कल्पनम् ।
किञ्च सत्वेन गत्यादिरागलेशेन सम्भवि ॥ १२७ ॥

किञ्चेशकेशवद्वाभ्यां वरमीशस्य कल्पनम् ।
जिज्ञासवो यदि सुरा निरुद्धा हि गतिश्रुतिः ॥ १२८ ॥

रुद्रस्य तामसत्वाच्च निरुद्धा हि गतिश्रुतिः ।
किञ्चायं परमात्मा वा ब्रह्मनिष्ठोऽन्य एव वा ॥ १२९ ॥

इति प्रश्ने भवद्रीत्या ह्युत्तरं विषमं भवेत् ।
किञ्चेशभ्रान्ततावुद्धिराहित्येन न सम्भवेत् ॥ १३० ॥

उपदेशश्शिवज्ञाने न हेतुश्शङ्करे सुरैः ।
ज्ञाते प्रश्नासंभवश्च विष्णुचिह्नस्य शङ्करे ॥ १३१ ॥

अभावादुक्तदोषो हि निरोधश्च गतिश्रुतेः ।
तेषां भ्रमे नैव मानं चेत्रो माहात्म्यदर्शने ॥ १३२ ॥

किञ्च विज्ञायेशमिता अविज्ञायाथवा सुराः ।
नाद्यो हरीशाविज्ञानादीशज्ञानस्य लाघवात् ॥ १३३ ॥

द्वयाचैकस्य रुद्रस्य दिदृक्षाया लघुत्वतः ।
किञ्चेशे भ्रान्तताबुद्धिरहितानां न सम्भवेत् ॥ १३४ ॥

उपदेश इति ह्युक्तदोषादीश्वरतेश्वरे ।
ज्ञाता हि नित्यताबुद्ध्या त्वन्मते तदसम्भवात् ॥ १३५ ॥

भ्रान्ता ब्रह्माणि दृश्यन्ते श्रूयन्ते च हि सम्भ्रमः ।
नानुन्मत्तस्य लोकेऽस्ति समं तस्य निवारणम् ॥ १३६ ॥

वादिनोरन्त्यपक्षेऽपि गत्वा ते विदुरीश्वरम् ।
न ह्यविदुर्वोच्यपक्षे तु प्रश्नासम्भव ईरितः ॥ १३७ ॥

नान्तर्यामिपरः प्रश्नस्तत्सिद्धान्तविरोधतः ।
तदुत्पत्तेरभावाच्च तदभावो दिवौकसाम् ॥ १३८ ॥

अन्तर्यामिधियोऽभावात्तदभावो ह्यबालतः ।
अन्तरात्मोपदेशस्य वैयर्थ्याद्बहुगौरवात् ॥ १३९ ॥

द्वितीये सूपदेशस्तु निरुद्ध इति हीरितः ।
अत ईशप्रेक्षणस्यैवोद्देश्यत्वान्महेश्वरे ॥ १४० ॥

सर्वेशता यस्यैवं श्रुतिः किञ्च परेरितम् ।
माहात्म्यदर्शनं रुद्रे निषिद्धमिति हीरितम् ॥ १४१ ॥

तेन तत्संशयासिद्ध्या प्रश्नस्यासम्भवादियम् ।
श्रुतिरीशपरा किञ्च श्रुतेरे परिकल्पितः ॥ १४२ ॥

संशयो न प्रसक्तोऽत्र इयमीशपरा श्रुतिः ।
किञ्च तैनालसन्दर्भाध्ययनञ्चेन्न कल्प्यते ॥ १४३ ॥

सुराणामत्र तच्छब्दस्तत्रोक्तात्मपरो न हि ।
कल्पिते गौरवं किञ्च विकृतेन विजानताम् ॥ १४४ ॥

उपदेशासङ्कुचितो व्यर्थः किञ्च सुरोत्तमैः ।
सौवालार्थस्त्वेकदेश एव ज्ञातो न चेतरः ॥ १४५ ॥

इत्यत्र नैव मानं हि किञ्च स्यद्वयर्थता दृढा ।
दिशश्चान्तरमित्यस्य सङ्ग्रहादपि विस्तरात् ॥ १४६ ॥

स्पष्टादबुद्धो ह्यस्पष्टात्सङ्ग्रहात्सुधु बुध्यते ।
इति वादी वञ्चको हि किञ्च स्यादुपपन्नता ॥ १४७ ॥

अस्याः श्रुतेस्तत्सौवालसम्बाधं हि विना स्थिरा ।
किञ्चोपक्रमयुक्त्येशपरा सोऽन्तेति गीर्ध्रुवम् ॥ १४८ ॥

तच्छब्दस्य तथाङ्गः स्यात्सन्दंशन्यायतस्तथा ।
भूयोऽनुग्रहतश्चेशपरा सोऽन्तेति गीर्भवेत् ॥ १४९ ॥

सोऽहमित्यादिवाक्याच्च वाक्यशेषबलात्तथा ।
वाक्यशेषे पुरा ज्ञातरुद्रशब्दानुसारतः ॥ १५० ॥

भगवन्निति गोनैया तद्रूपस्त्वाच्च तत्तथा ।
किञ्चेशवाचकगिरा समभिव्याहृतत्वतः ॥ १५१ ॥

रुद्रेति प्रत्यभिज्ञानाद्रुद्रश्रुत्या तथैव हि ।
तत्प्रवाहगतत्वेन शिवधीप्रथमत्वतः ॥ १५२ ॥

ते देवा इति वाक्यस्थरुद्रगीरीशवाचिका ।
तद्गीरर्थस्य कर्मत्वे तत्स्तुतौ सिद्धमेव हि ॥ १५३ ॥

अतश्च भगवच्छब्दश्शिववाचक एव हि ।
ईशाभिधायिभगवच्छब्दानुगुणतस्तथा ॥ १५४ ॥

ते शब्दाश्चेश्वरपराः किञ्च विष्ण्वीशयोस्तयोः ।
अभेदे रुद्रशब्दस्य रूढौ नैव हि बाधकम् ॥ १५५ ॥

त्वद्रीत्या भगवच्छब्दो रुद्रे रूढो भवेद्ध्रुवम् ।
यो वै रुद्रस्स इत्यत्र वाक्यघटितत्वेन सम्भवे ॥ १५६ ॥

त्रित्वं तु गौरवग्रस्तमावृत्तौ च तथैव हि ।
भगवानिति शब्दस्य रौद्रस्यु बहुधेरितः ॥ १५७ ॥

हरावभेदो ह्यर्थस्याहुदेशत्वसमाश्रये ।
भगवानिति भूतेशे बहुधोक्तिस्तु युज्यते ॥ १५८ ॥

इत्यादिदोषैर्वाक्यार्थस्त्वदुक्तो हि निराकृतः ।
वस्तुनो भगवच्छब्दो न रूढो हि हरीशयोः ॥ १५९ ॥

वा त्वनाऽर्पर्यविरहादतोऽत्र स्तुतिकर्मता ।
शिवस्यैवेति सिद्धं हि ततस्सोऽन्तो गीर्भवेत् ॥ १६० ॥

ईशाभिधायिनी किञ्च स एक इति वाक्यके ।
इतीश्वरधर्मास्ते तारे चेद्बहवो नयाः ॥ १६१ ॥

बाध्या इत्यादिभिर्न्यायैस्तद्वाक्यं हीशबोधकम् ।
तद्वाक्यस्यानुसारेण सोऽन्तगीरीशबोधिका ॥ १६२ ॥

सुवाह्वित्यादिकं वाक्यं तमीशानादिकं तथा ।
ईशाभिधायकं सिद्धमतस्सोऽन्तेति गीर्भवेत् ॥ १६३ ॥

ईशाभिधायिनी ह्येवं बहुभिर्हेतुभिर्ह्यदम् ।
अहमर्थे परोक्षत्वविवक्षायां भवेत्खलु ॥ १६४ ॥

तच्छब्दः कविभिर्ह्यत्र तथैव व्यवह्रीयते ।
उपस्थितः परोक्षोऽपि तच्छब्दार्थस्तु विश्रुतः ॥ १६५ ॥

अस्मच्छब्देन निर्दिष्टे तच्छब्दस्तथापि वै हि ।
गिरोऽपूर्वसम्बन्धो गुणत्वेन हि विश्रुतः ॥ १६६ ॥

अस्मच्छब्देन निर्दिष्टे परोक्षत्वं विवक्षितम्
यथा विप्रमुखान्ब्य श्रीमद्रामायणादिषु ॥ १६७ ॥

त्वन्मदादिशब्दत्यागाय अन्यथादिरूपाश्रितम् ।
यथा मया परोक्षत्वमुक्तं पाणिनिना श्रितम् ॥ १६८ ॥

अत्रावयोरसमं हीति मत्पक्षेऽतीव हृद्यता ।
त्वत्पक्षे बहुदोषणामुक्तत्वात्सोऽन्तरेति वाक् ॥ १६९ ॥
ईशाभिधायिनी ह्यात्मा निष्प्रत्यूहो हदो ह्यमून् ।
तथा चास्याः श्रुतेरीशपरत्वे षड्विधान्यपि ॥ १७० ॥
दृश्यन्तेऽत्र हि लिङ्गानि यो रुद्रेत्युपसंहृति ।
तमात्मस्थं तमीशानमिति चोक्तं फलं परम् ॥ १७१ ॥
आख्यायिकार्थवादोऽत्र ह्युपपत्तिरिशवस्थितिः ।
यदुक्तमीशे जीवत्व तन्निराक्रियतेऽधुना . १७२ ॥
ईशेशतावाक्यजाताद् दुर्बलैः प्रबलैरुत ।
जीवतेशे प्रतीता ते मैत्ता नाथो हरावपि ॥ १७३ ॥
तदापत्तेरसमर्थानां दुर्बलैर्बाधनं यदि ।
सर्वतन्त्रसमुच्छेदो भवेदत्र द्वितीयके ॥ १७४ ॥
तात्पर्यलिङ्गवत्त्वेन प्रबला हीशता गिर. ।
तदभावेन दौर्बल्यं जीवत्ववचसां ध्रुवम् ॥ १७५ ॥
अर्थवादत्वतश्चैषां जीवत्ववचसां तथा ।
महोपनिषदीशस्य सृष्टितः प्रागनन्तरम् ॥ १७६ ॥
अभावनन्योरुतयोर्हि हरावीशत्वबोधने ।
तात्पर्यमन्यथा वाक्यभेदापत्तेर्हि तद्वयम् ॥ १७७ ॥
ईशस्य मूर्तिरूपस्य समं तच्च हराविति ।
प्रागेवोक्तं किञ्च तत्रापीशानेति श्रुतिद्वयात् ॥ १७८ ॥
महादेवत्वलिङ्गाच्च हीशेशत्वं सुनिश्चितम् ।
पैङ्गिश्रुतौ शङ्करत्वलिङ्गोक्तेरसा तथैव हि ॥ १७९ ॥
गव्यचौर्यं गवेन्द्रत्वं केशवस्तुपलायनम् ।
यथाश्रयस्तथैवेशः पाशुपत्यं बलार्थकम् ॥ १८० ॥
सुरेभ्यो ग्रहहीत्सरमादाधिक्यं कमलासने ।
आश्रयाच्च घनादित्वमुपपन्नं यथा भवेत् ॥ १८१ ॥

गोविन्दादिश्रीशनामामिव तत्र स्वयम्भुवा ।
क्लेशनामधेयानामनादित्वं सुसम्भवि ॥ १८२ ॥
क्षीराब्धिनिलयो विष्णुः क्षीरं चौर्यादथाग्रहीत् ।
तद्वत्सर्वात्मकोऽपीशो ह्यष्टमूर्तित्वमग्रहीत् ॥ १८३ ॥
अर्पितं ब्रह्मणो विष्णु रामरूपो यथाब्रवीत् ।
न मादृशो दुष्कृतीनि हीशोऽप्यहतपाप्मवान् ॥ १८४ ॥
इत्यब्रवीत्तामसत्वं नैवेशत्वस्य बाधकम् ।
कालाग्निसदृशः कोपे क्रूरे रुद्रश्च वै समौ ॥ १८५ ॥
क्षान्तियत्वं समं प्रोक्तं तयोपासकता समा ।
मृत्युसूक्तं मृत्युपरं नैव विष्णुपरं हि तत् ॥ १८६ ॥
निकर्षो नैव हीशस्य नटनं श्रीपतेरिव ।
अतश्शिवेशनावाक्यसन्दर्भानुगुणेन हि ॥ १८७ ॥
तज्जीवत्वस्फोरकाणां वाक्यानां नयनं ध्रुवम् ।
ईशं प्रति · · · · · तेऽदृष्टान्तत्वमकल्पने ॥ १८८ ॥
हिरण्मयेदृशं सुसम्पूर्णमीशत्वेऽन्यत्र निर्गते ।
सिद्धे जीवत्वमिति तदन्योन्याश्रयदूषितम् ॥ १८९ ॥
हरावपि समन्वेतं जीवत्वं स्यादितिश्चेत् ।
निश्चिते बाध्यमीशत्वं स्याच्चेदीशे तदापि हि ॥ १९० ॥
जीवत्वबोधकगिरा दौर्बल्याद्बाध्यता स्थिरा ।
प्रथमं निश्चितस्यापि होमस्याहवनीयके ॥ १९१ ॥
बाधो दृष्टस्समस्तातावुक्तदोषो हरावपि ।
अतोऽथर्वशिरश्शाखे सर्वेशत्वपरं ध्रुवम् ॥ १९२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वाधिकसरस्वतीचरण-
शिष्यश्रीमद्बोधेन्द्रसरस्वतीकृतेषु हरिहराद्वैतभूषण-
कारिकायां हरपारम्यनिरूपणं
नाम द्वितीयो भागः ।

---

## ॥ अथ तृतीयो भागः ॥

अतस्सर्वेशरूपेण सिद्धमैक्यं हरीशयोः ।
उक्तरीत्या हरे विष्णौ चेशत्वस्यानिवारणात् ॥ १९३ ॥

एकत्वपरवाक्यानां सृष्टे प्रागीश्वरे हरौ ।
अन्यथानुपपत्तिर्हि वैदिकानां भवेद् दृढा ॥ १९४ ॥

हरीशयोः स्वाङ्गिसर्वकारणत्वगिरा भवेत् ।
बाधस्सर्वेशनानात्वमनिवार्यञ्च सम्भवेत् ॥ १९५ ॥

हरीशयोर्वाचकानामधिकानां शतादपि ।
अभिधानश्रुतीनां हि बाधाङ्गीकरणाद्वरम् ॥ १९६ ॥

ऐक्यरूपैकधर्माङ्गीकरणं विष्णुशर्वयोः ।
युक्तमेकनिषादेतिपदस्वारस्यतः खलु ॥ १९७ ॥

विद्यादित्रितयं तत्र कल्पितं दृश्यते स्फुटम् ।
किन्त्वान्तरिति सूत्रे हि पुंसो स्वर्णमयाङ्गयोः ॥ १९८ ॥

ईशत्वरक्षणायैक्यं वाक्यं लिङ्गचतुष्टयात् ।
शिवमच्युतमित्युक्तं महोपनिषदि स्फुटम् ॥ १९९ ॥

तयोरैक्यञ्च किञ्चैव श्वेताश्वतरसञ्ज्ञके ।
श्रुतिसन्दर्भकेऽनन्तविश्वरूपेशशब्दके ॥ २०० ॥

हरशब्देन चान्यत्र त्वीशानन्तश्रुतिद्वयात् ।
तयोरैक्यं सिद्धमेव विश्वरूपो भवोऽभवत् ॥ २०१ ॥

इत्युक्तं हि तयोरैक्यं सिद्धं हरगिरा हि तत् ।
श्रुतेरस्यास्तु तात्पर्यमैक्ये ह्यभ्यासतः स्फुटम् ॥ २०२ ॥

किञ्च गर्भोपनिषदि स्फुटमेव हरीशयोः ।
सर्वप्रदातृतैशत्वप्रतिपादनतः स्फुटम् ॥ २०३ ॥

तयोरैक्यं सिद्धमेव किञ्च ब्रह्म श्रुतं • • • ।
तयोरैक्यं हि कण्ठोक्तं किञ्च मैत्रायणश्रुतौ ॥ २०४ ॥

गायत्रीप्रतिपाद्यत्वमुभयोर्दर्शितं स्फुटम् ।
तेन सिद्धं तयोरैक्यं किञ्चान्यत्र • • • • प्यात्
॥ २०५ ॥

अनिवार्यं तयोरैक्यं तैत्तिरीयश्रुतौ स्फुटम् ।
उक्तं तत्राम्भसीत्यादौ प्रतिपाद्ये परात्मनि ॥ २०६ ॥

विष्णुत्वसिद्ध्यै लिङ्गे द्वे अनन्तश्रुतिस्ततः ।
अन्यत्र विश्वरूपेति श्रुतिरप्यत्र दृश्यते ॥ २०७ ॥

अन्यत्र ह्यच्युतानन्तनारायणहरीति हि ।
श्रुतयोऽतिस्फुटा लिङ्गमेकमत्र स्फुटं तथा ॥ २०८ ॥

परात्मनीशिता चेति श्रुतिश्रेयं पराब्रवीत् ।
तथाकाशाद्यादिसन्दर्भे ईशेति तदनन्तरम ॥ २०९ ॥

रुद्रेति च श्रुतिः स्पष्टा महेश्वर इति स्फुटा ।
ततो रुद्रेतिरूपाश्च श्रुतयोऽतिस्फुटास्ततः ॥ २१० ॥

अम्बिकापतिरित्यन्या ह्युमापतिरिति श्रुतिः ।
दृश्यतेऽन्यत्र चेशेति श्रुतिरन्यत्र विश्रुता ॥ २११ ॥

वामदेवेति रुद्रेति महादेवेति तत्परम् ।
रुद्रेशानेश्वर इति श्रुतयश्च ततः परम् ॥ २१२ ॥

शिवेति च श्रुतिः स्पष्टा ततश्चैतत्परात्मनि ।
विष्णुत्वमीश्वरत्वञ्च सिद्धं तेन हरीशयोः ॥ २१३ ॥

जगत्कारणचैतन्यरूपेणैक्यञ्च हि सिध्यति ।
निषादस्थपतीत्यादिनयोदाहृतिपूर्वकम् ॥ २१४ ॥

स्थपतिर्दर्शितात्र किञ्चात्र परमात्मनि ।
हरित्वेशत्वकथने तात्पर्यं हि श्रुतेरिदम् ॥ २१५ ॥

ततश्चैतदभेदे स्यात् श्रुतेर्भावो हि सुस्थिरः ।
कठवल्ल्याञ्च सुसूक्तं तत्र विष्णोरिति श्रुतेः ॥ २१६ ॥

अनन्तेति श्रुतेश्चात्र प्रतिपाद्यपरात्मनि ।
विष्णुत्वं सिद्धमनेन त्वीशानश्रुतिभिस्तथा ॥ २१७ ॥

परमात्मनि हीशत्वं सिद्धं तस्माद्धरीशयोः ।
अभेदस्सुस्थिरस्तज्ज्ञो ह्येतद्भाष्यकृतामपि ॥ २१८ ॥

संमतं तद्धि सुसूक्तं श्वेताश्वतरभाष्यके ।
नृसिंहतापिनीश्रुत्यामप्युक्तं व्यक्तमेव हि ॥ २१९ ॥

तत्रोग्रश्रुतिभिर्विष्णुश्रुतिभिश्च परात्मनः ।
कथनात्तेन रूपेण सिद्धमैकघं तयोरिदम् ॥ २२० ॥

ऋतं सत्यं परं ब्रह्मेत्यादिवाक्ये समीरितम् ।
मूर्तिरूपेण च तयोरर्थेत्यत्रापि तत्तथा ॥ २२१ ॥

श्रियं लक्ष्मीमित्यनेन तदैक्यं बोध्यते दृढम् ।
अभ्यस्तत्वादभेदस्य तत्र भावः श्रुतेर्दृढः ॥ २२२ ॥

स्कन्दश्रुतौ च तत्प्रोक्तं शिवायेत्यादिना स्फुटम् ।
ब्रह्माण्डाख्यपुराणे च देवादिभ्यो हि विष्णुना ॥ २२३ ॥

दर्शितञ्च तदद्वैतं विष्णुधर्मोत्तरे तथा ।
ब्रह्माण्डोपपुराणे च ह्यगस्त्याय शिवेन तु ॥ २२४ ॥

अद्वैतं दर्शितं द्वैतदर्शनेऽनर्थ ईरितः ।
वराहाख्यपुराणे च तथैव प्रतिपादितम् ॥ २२५ ॥

आग्नेयाख्यपुराणे च कूर्मे चैव तथेरितम् ।
दक्षाय ब्रह्मणा प्रोक्तमृषिभ्यश्शङ्करेण हि ॥ २२६ ॥

पुराणे वैष्णवेऽप्युक्तं भारते च तथैव हि ।
हरिवंशे शिवेनैव निर्णीतं विष्णुसन्निधौ ॥ २२७ ॥

एतत्पुराणवचसामर्थस्सर्वोऽपि वैदिकः ।
दर्शितश्रुतिवाक्यानामस्यार्थस्येप्सितत्वतः ॥ २२८ ॥

स्कन्दोपनिषदो वाक्ये पुराणार्थो हि कृत्स्नशः ।
दर्शितस्तेन वाक्येन सैकरूप्यं हि तद्गिराम् ॥ २२९ ॥

वैदिकीनामतस्सिद्धं तदर्थे श्रौतता स्फुटा ।
तथा च बिम्बरूपेण ह्यभेदो हरिशर्वयोः ॥ २३० ॥

श्रीमूर्तीनां हि सर्वासां ज्ञानैश्वर्यादिकं समम् ।
ब्रह्मतर्कस्तवे व्यक्तं दीक्षितैर्हि प्रदर्शितम् ॥ २३१ ॥

ऐक्यं तयोस्तथा मूर्तिरूपयोर्हि हरीशयोः ।
ईशत्वं दर्शितं तच्च तापिन्यां सिद्धमेव हि ॥ २३२ ॥

कैवल्ये तैत्तिरीये च ह्यथर्वशिरसि स्फुटम् ।
महोपनिषदि स्पष्टं शिखायां च तथैव हि ॥ २३३ ॥

श्रुत्यन्तरे पुराणादावीश्वरत्वं तयोः स्फुटम् ।
तुरीययोस्तयोश्चैवमभिन्नत्वं स्फुटं ततः ॥ २३४ ॥

ईश्वरत्वमवताराणां व्यक्तमेव निगद्यते ।
रामायणे हि विस्पष्टं श्रीरामे विष्णुतोच्यते ॥ २३५ ॥

श्रीरामचरितस्योपक्रमे तस्योपसंहृतौ ।
स्फुटं रामस्य विष्णुत्वमुक्तं मध्ये च भूयसः ॥ २३६ ॥

तस्येश्वरत्वलिङ्गानि दर्शितानि बहूनि च ।
सर्वेष्वपि पुराणेषु रामो विष्णुरितीरितः ॥ २३७ ॥

शिव एवाभवद्राम इत्यप्युक्तं कचित्कचित् ।
जीवः कश्चिद्राम आसीदिति न कापि सूचितम् ॥ २३८ ॥

कृष्णादीनामपि तथा नन्द्यादेरीशता तथा ।
हरीशयोः परेशत्वमैक्यमप्युक्तमेव हि ॥ २३९ ॥

हरीशयोर्जीवता किं बिम्बचैतन्यरूपयोः ।
अथ वा प्रतिबिम्बत्वं मात्रयोराद्यपक्षके ॥ २४० ॥

बिम्बे जीवत्वदौर्बल्याखानन्त्यादौ पुरेरिताः ।
दोषास्ते चात्रापि समा बन्धमुक्ती पुनःपुनः ॥ २४१ ॥

स्यातां तयोर्द्वितीये तु जीवरूयातादिता स्थिरा ।
इति सिद्धान्तभङ्गादि भवेद्दोषचतुष्टयम् ॥ २४२ ॥

अनादित्वात्स्वभावेन मुक्तामाव . . . . . ।
अकृताभ्यागमोऽपि स्यात्सर्वेषां भववर्तिनाम् ॥ २४३ ॥

अवतारेषु बन्धस्य नटत्वे गिरा भवेत् ।
स्वारस्यभङ्गमात्रं हि सत्यत्वे तु प्रसज्यते ॥ २४४ ॥

तेषु विष्णुत्वशम्भुत्वपराणां भूयसां गिराम् ।
लक्षणैव हि किंच स्यादुपक्रमविरुद्धता ॥ २४५ ॥

किंच तेषु परेशत्वलिङ्गानां व्यर्थता भवेत् ।
किंच रामेऽपि दुःखित्व तपस्वित्वं हि बाध्यते ॥ २४६ ॥

रामायणादिवचनैर्भृगुशापोपपादकैः ।
विष्णुनोपार्जितं कर्म फलदायि भवेद्यदि ॥ २४७ ॥

जीवभूतस्य रामस्य तर्हि निष्फलता स्फुटा ।
शापाभिधायिवचसा किंच सेश्वरवादिनाम् ॥ २४८ ॥

अकृताभ्यागमो नैव दोषः स्यात्किन्त्व कर्म हि ।
अन्येन कृतमन्यस्मै फलं यच्छेन्नवेदपि ॥ २४९ ॥

अप्रामाण्यं कर्तुरेव फलप्राप्त्यभिधायिनाम् ।
यत एव हि सूक्तं दीक्षितै रघुनायके ॥ २५० ॥

नटनं दुःखमज्ञानमिति सिद्धान्तसङ्ग्रहे ।
बालकाण्डवचोऽर्थस्य ह्यभिधायिनि पाद्मके ॥ २५१ ॥

नटनत्वं तस्य देव्यै ईश्वरेण हि बोधितम् ।
अवतारे मनुष्यत्वबुद्धीनां सकलं स्फुटम् ॥ २५२ ॥

पुण्यं नश्यति सम्यक् स्याद् दुर्गतिर्महती स्थिरा ।
इत्युक्तमीश्वरेणैव गीतायामर्जुनाय हि ॥ २५३ ॥

श्रीमद्भागवते व्यक्तं दर्शितं रघुनायके ।
दीक्षितैर्ब्रह्मतर्काख्ये दर्शितेषु वचस्सु हि ॥ २५४ ॥

हरेर्जन्मादिकं नैव नटनं हीति धीमताम् ।
मुक्तिस्सुदुर्लभैवेति तद्वचस्सु यदीरितम् ॥ २५५ ॥

तद्गीतावचनैस्सम्यगर्थाद् बोधितमेव हि ।
पुराणे वैष्णवे चैतन्नटनं हीति दर्शितम् ॥ २५६ ॥

न्यायसाम्यान्महेशस्य ह्यवतारेष्विदं समम् ।
अतो विष्णोरपि शिवस्याभेदो बहुधा श्रुतः ॥ २५७ ॥

श्रुतितात्पर्यविषयसंशयोऽत्र न कश्चन ।
श्रेयोऽर्थिभिर्वैदिकैर्हि कर्तव्यस्सूक्ष्मबुद्धिभिः ॥ २५८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविद्याधिकसरस्वती-
चरणशिष्यश्रीमदुपेन्द्रसरस्वतीकृतिषु हरिहराद्वैतभूषणकारिका
हरिहरयोरद्वैतनिरूपणं नाम तृतीयो भागः ।

---

॥ हरिहराद्वैतभूषणकारिका समाप्ता ॥

# श्लोकानुक्रमणिका


श्लोकः

अ

अकृताभ्यागमो नैव .. .. 162
अचेतनविशिष्टस्य .. .. 149
अतश्च भगवच्छब्द: .. .. 154
अतस्सर्वेशता विष्णौ .. .. 142
अतस्सर्वेशरूपेण .. .. 158
अतो निमित्तमात्रत्वं .. .. 144
अतोऽपीशे ध्वनीशत्वं .. .. 142
अत्रावयोस्समं हीति .. .. 156
अथर्वशिरसि स्पष्ट .. .. 152
अर्थवादत्वतश्चैषा .. .. 156
अद्वैतं दर्शितं द्वैत .. .. 160
अधिका स्याद्दीश्वरस्य .. .. 147
अनन्तं शाश्वतमिति .. .. 148
अनन्तेति श्रुतेश्चात्र .. .. 160
अनादित्वासंभवेन .. .. 162
अनिवार्यं तयोरैक्यं .. .. 159
अनौचित्यं शिवस्यैव .. .. 142
अन्तर्यामिविधयोऽभावात् .. .. 153
अन्तर्यामिपरत्वाच्च .. .. 142
अन्यत्र च्युतानन्त .. .. 159
अन्यथा गौरवापत्तिः .. .. 152
अपरिच्छिन्नमयथा .. .. 115
अपहास्यो हि सर्वेषा .. .. 143
अप्रामाण्य कर्तुरेव .. .. 162

श्लोकः

अभावजन्योरुक्तयोर्हि .. .. 156
अभावादुक्तदोषो हि .. .. 152
अभीतिकं मायिकं यत् .. .. 144
अभ्यासापूर्वते स्पष्टे .. .. 141
अमूर्तस्य ब्रह्मणो हि .. .. 147
अम्बिकापतिरित्यन्या .. .. 159
अवतारेषु वन्द्यस्य .. .. 162
अविद्यमानयो कार्ये .. .. 148
अष्टाविंशतिवास्थानां .. .. 148
असंभवात्फलाभावात् .. .. 148
असच्छब्देन निर्दिष्टे तत् .. 155
असच्छब्देन निर्दिष्टे परौ .. 155
अस्याः श्रुतेस्सौवाल- .. .. 154
अस्येशतानोधकाना .. .. 149
अर्पितं ब्रह्मणा विष्णु .. .. 157

आ

आख्यायिकार्थवादोऽत्र .. .. 160
आग्नेयाम्यपुराणे च .. .. 160
आद्ये तस्यामविद्याया .. .. 143
आवृतासीति निर्णीते .. .. 142

इ

इति प्रश्ने मनद्दीत्या .. .. 152
इत्यत्र नैव मान हि .. .. 154
इत्यत्रीवामसत्व .. .. 157

| | श्लोक॰ |
|---|---|
| इत्यादिदोषैर्वाक्यार्थः | 155 |
| इत्युक्तं हि तयोरैक्यं | 159 |
| इत्युक्तेऽपि न हेतुस्स्यात् | 143 |
| **ई** | |
| ईशत्वमबलाराणा | 161 |
| ईशत्वरक्षणायैवं | 158 |
| ईशस्य मूर्तिरूपस्य | 156 |
| ईशानादित्वसिद्धान्त | 142 |
| ईशाभिधायिनी किञ्च | 155 |
| ईशाभिधायिनी ह्यात्मा | 156 |
| ईशाभिधायिनो ह्येवं | 155 |
| ईशेशतावाक्यजातात् | 156 |
| ईश्वरत्वासाधकं स्यात् | 149 |
| **उ** | |
| उच्यतेऽत्रेति तैरत्र | 140 |
| उदाहृताशिवस्यैता | 150 |
| उपक्रमे सर्ववास्य | 141 |
| उपदेश इति युक्त | 153 |
| उपदेशशिवज्ञाने | 152 |
| उपदेशस्सङ्कुचितो | 154 |
| उपपत्तिर्दर्शिताल॰ | 159 |
| **ऋ** | |
| ऋतं सत्यं परं ब्रह्म | 160 |
| **ए** | |
| एकत्वपर्यायानां | 153 |
| एकस्या न वरे तुल्यं | 146 |
| एकस्वीनत्वस्य | 146 |
| एतत्पुराणवचसां | 161 |
| एवञ्च सृष्टेः प्राङ् मूर्तौ | 145 |
| **ऐ** | |
| ऐक्यं तयोस्तथा | 161 |
| ऐक्यरूपैकधर्माद्वी | 158 |
| **औ** | |
| औपम्यञ्च निरुप्येत | 140 |
| **क** | |
| किञ्च गर्भोपनिषदि | 158 |
| किञ्च जीवत्वमेव स्यात् | 142 |
| किञ्च तेषु परेशत्व | 162 |
| किञ्च प्रपञ्चसृष्ट्यादि | 150 |
| किञ्च मुक्तिं गतानाञ्च | 147 |
| किञ्च विज्ञायेशमिता | 153 |
| किञ्च श्रुतौ मूर्तिरूप | 151 |
| किञ्च षड्विंशतिश्रुत्या | 145 |
| किञ्चाथर्वशिखावाक्ये | 145 |
| किञ्चेशकेशवाभ्यां | 152 |
| किञ्चेशभोग्यविष्णुभ्यो | 152 |
| किञ्चोत्पत्तौ लयश्च स्यात् | 148 |
| किञ्चोभयोर्हेतुताया | 140 |
| किं वा मायिकमेव स्यात् | 147 |
| कृत्स्नप्रसक्तिरित्यादौ | 147 |
| कृष्णादीनामपि तथा | 161 |
| कल्पे तैत्तिरीये च | 161 |
| क्षत्रियत्वं समं ह्युक्तं | 157 |
| क्षीराब्धिस्थयो ति | 157 |

श्लोकः

ख

स्तान्तर्यामीति विस्पष्ट .. .. 146

ग

गदिता तैत्तिरीये च .. .. 148
व्यत्यौ गवेन्द्रस्त्व .. .. 156
गायत्रीप्रतिपाद्यत्वं .. .. 159
गोविन्दादिश्रीशनाम्नां .. .. 157

च

चेतनोऽन्यो न हेतुः स्यात् .. 149

ज

जगत्कारणचेतन्य .. .. 159
जनिवाक्यं दुर्बलत्वात् .. .. 145
जनिवाक्येषु चेद्गौणी .. .. 147
जनिश्रुतिस्मृतीना स्यात् .. .. 147
जन्यतोपास्यमूर्तीनां .. .. 145
जाड्यादुपादानहेतौ .. .. 144
जीवत्वश्च न तस्य स्यात् .. .. 143
जीवत्वबोधकगिरां .. .. 157
जीवमुक्तस्य रामस्य .. .. 162

त

तच्छब्द कविभिर्यत .. .. 155
तच्छब्दस्य तथार्थः स्यात् .. .. 164
तज्जीवत्वस्फोरकाणां .. .. 157
तदर्थतद्भेदे स्यात् .. .. 160
तत्रोभश्रुतिभिर्विष्णु .. .. 160
तदापत्तेस्सनयानां .. .. 156

श्लोकः

तदुक्तमव्ययत्वञ्च .. .. 148
तद्गिरां व्यर्थता च स्यात् .. .. 143
तद्गीतावचनैस्सम्यक् .. .. 163
तद्वाक्यानामतः पूर्व .. .. 147
तयोरीश्वरतोपास्ति .. .. 142
तयोरैक्यञ्च किञ्चैवं .. .. 158
तयोरैक्यं सिद्धमेव .. .. 159
तस्मादीशस्य नेशत्व .. .. 150
तस्येश्वरत्वलिङ्गानि .. .. 161
तात्पर्यलिङ्गवत्त्वेन .. .. 156
तृतीये अन्यमूर्तिस्सा .. .. 147
ते देवा इति वाक्यस्य .. .. 154
तेन तत्संशयासिध्या .. .. 153
ते शब्दाश्चेश्वरपराः .. .. 154
तेषु विष्णुत्वशम्भुत्व .. .. 162
त्रित्वं तु गौरवमस्तं .. .. 165
त्रैकालिकेशविज्ञानं .. .. 152
त्वदुक्ताभिन्नताया हि .. .. 143
त्वद्गीत्या भगवच्छब्दो .. .. 154

द

दर्शितश्च तदद्वैतं .. .. 160
दर्शितामूर्तवाक्याना .. .. 146
दिव्यर्नाट्यं सुसंपूर्णे .. .. 167
दृश्यन्तेऽत्र हि लिङ्गानि .. .. 150
दृष्टान्तविरहाभाव .. .. 146
दुर्याधकस्य रुद्रस्य .. .. 153
द्वितीये सुपर्देवस्तु .. .. 153

श्लोकः

ध

धर्म्यनुस्मृतिनियमो .. .. 144
ध्रुवेति नियतश्शब्दः .. .. 146

न

नटनं दुःखमज्ञानं .. .. 162
नटनत्वं तस्य देव्यै .. .. 163
न द्वितीयो बाधकल्प .. .. 146
न रमेतेति वाक्यस्य .. .. 143
नान्तर्यामिपरः प्रश्नः .. .. 153
नारायणानुवाकोऽयम् .. .. 150
नास्तीति कारणत्वञ्च .. .. 148
निकर्षो नैव हीशस्य .. .. 157
नित्यता च परेशत्वं .. .. 149
नित्याव्ययस्व वध्यत्वे .. .. 148
निर्णीतमेतत्सुदृढं .. .. 147
नो चेत्स्यादुक्तवैयर्थ्यं .. .. 144
न्यायसाम्यान्महेशस्य .. .. 163

प

परतत्त्वपरज्योतिः .. .. 149
परत्वमेव युक्तं हि .. .. 150
परमात्मनि हीशत्वं .. .. 160
परात्मनीशिता चेति .. .. 159
परानन्दं जगन्नाथं .. .. 141
पुण्यं नश्यति .. .. 163
पुराणवचसा चैव .. .. 144
पुराणे वैष्णवेऽप्युक्तं .. .. 160
पूर्वापरविरोधाच्च .. .. 141

श्लोकः

पूर्वोत्तरविरोधाच्च ह्यत्र .. .. 141
प्रतिबिम्बो यतो जीवः .. .. 144
प्रोक्ता श्रुतौ नैव शंभोः .. .. 151

ब

बहुभिर्यदि नेशत्वं .. .. 149
बहुभ्योऽपि द्वयस्यैव .. .. 152
बहुमूर्ते श्रुतीनां स्यात् .. .. 146
बहुविग्रहसृष्टेश्च .. .. 145
बाधो दृष्टस्समश्चासौ .. .. 157
बाध्या इत्यादिभिर्न्यायैः .. .. 155
बिम्बचैतन्यपरता .. .. 145
बिम्बचैतन्यरूपेण .. .. 143
बिम्बरूपे भवेदेव .. .. 143
बिम्बे जीवत्वदौर्बल्या .. .. 161
बिम्बोपादानते सिद्धे .. .. 149
ब्रह्मविद्याधिकारित्वात् .. .. 152
ब्रह्माण्डहेतुमूर्तेश्च .. .. 145

भ

भगवानिति गीर्नैषा .. .. 154
भोगमात्रेति सूत्रेण .. .. 147
भ्रान्ता ब्रह्माणि दृश्यन्ते .. .. 153

म

महादेवत्वलिङ्गाच्च .. .. 156
महोपनिषदि स्पष्टम् .. .. 141
मानाभावः फलाभावः .. .. 150

र

रामायणादिवचनैः .. .. 162
रुद्रशब्दोदितस्यैव .. .. 150

| | श्लोकः |
|---|---|
| रुद्रस्य तामसत्वात् .. .. | 152 |
| रुद्रेति च श्रुतिः स्पष्टा .. .. | 159 |
| रुद्रेति प्रत्यभिज्ञानात् .. .. | 154 |
| **व** | |
| वाक्यतात्पर्यविरहाद् .. .. | 155 |
| वादिनोऽस्त्यपक्षेऽपि .. .. | 153 |
| वामदेवेति रुद्रेति .. .. | 159 |
| विद्यादिलिङ्गं तत्र .. .. | 158 |
| विरोधन्यायबाधः स्यात् .. .. | 150 |
| विश्वंभरादयश्शब्दाः .. .. | 150 |
| विष्णुत्वसिद्धये लिङ्गं .. .. | 159 |
| विष्णोस्तुरीयता स्पष्टा .. .. | 142 |
| वेदशास्त्रैरिति वचः .. .. | 150 |
| वैदिकीनामतस्सिद्धं .. .. | 161 |
| वैयर्थ्यं जनिवाक्यस्य .. .. | 144 |
| **श** | |
| शरीरत्वादिना सिद्धं .. .. | 145 |
| शिखायां परमात्मा च .. .. | 141 |
| शिरस्यपि तथैवोक्तम् .. .. | 142 |
| शिव एवामवद्रामः .. .. | 161 |
| शिवनारायणाभेद .. .. | 141 |
| शिवाभेदो हि दौर्मत्य .. .. | 151 |
| शिवेति च श्रुतिः स्पष्टा .. .. | 159 |
| श्रियं लक्ष्मीमित्यनेन .. .. | 160 |
| श्रीमद्भागवते व्यक्तं .. .. | 163 |
| श्रीमूर्तीनां हि सर्वासां .. .. | 161 |
| श्रीरामचरितस्य .. .. | 161 |
| श्रीरामगौरीशयोस्साम्यं .. .. | 147 |
| श्रुतितात्पर्यविषय .. .. | 163 |
| श्रुतीनाञ्च पुराणानां .. .. | 142 |
| श्रुत्यन्तरे पुराणादौ .. .. | 161 |
| श्रुत्या लिङ्गेन सर्वेशात् .. .. | 144 |
| श्रूयते तत्र यत्प्रोक्तं .. .. | 148 |
| **स** | |
| सन्दंशन्यायबाधाश्च .. .. | 142 |
| संमतं तद्धि सुष्ठूक्तं .. .. | 160 |
| संशयो न प्रसक्तोऽतः .. .. | 153 |
| समं तयोस्तुरीयत्वं .. .. | 160 |
| सर्वगन्धादिवाक्यानां .. .. | 146 |
| सर्वव्यापकचित्त्वञ्च .. .. | 149 |
| सर्वासामपि मूर्तीनां .. .. | 146 |
| सर्वेशता वरैवेयं .. .. | 153 |
| सर्वेषाञ्च बलापत्तेः .. .. | 143 |
| सांशत्वं तत उत्पत्तिः .. .. | 144 |
| सामर्थ्यसिद्धये तस्य .. .. | 146 |
| सा मूर्तिरूपणैव स्यात् .. .. | 144 |
| साम्बं सदाशिवं .. .. | 141 |
| सिद्धं हरेरीशतात्र .. .. | 145 |
| सिद्धान्तसङ्ग्रहेऽप्युक्तं .. .. | 143 |
| सुग्राहीत्यादिकं वाक्यं .. .. | 155 |
| सुराणामत्र तच्छब्दः .. .. | 153 |
| सुरेभ्यो ह्यमहीत्वत्वात् .. .. | 156 |
| सृष्टेरनन्तरं पूर्वं .. .. | 144 |
| सोऽहमित्यादिवाक्याञ्च .. .. | 154 |
| सौवालानां व्यर्थता स्यात् .. .. | 148 |
| स्कन्दश्चौ च तयोर्क्तं .. .. | 160 |

| | श्लोकः |
|---|---|
| स्कन्दोपनिषदो वाक्ये | 161 |
| स्थूलसूक्ष्मत्वभेदेन | 150 |
| स्पष्टाद्बुद्धो ह्यस्पष्टात् | 154 |
| रुद्रस्य तामसत्वाच्च | 152 |
| रुद्रेति च श्रुतिः स्पष्टा | 159 |
| रुद्रेति मत्यभिज्ञानात् | 154 |
| स्यातां तयोर्द्वितीये तु | 162 |
| स्वान्तर्यामित्वमुत्सृज्य | 155 |
| स्वारस्यहानिर्वाक्यस्य | 143 |
| **ह** | |
| हरशब्देन चान्यत्र | 158 |
| हरावपि समत्वेदं | 157 |
| हरावभेदो व्यर्थस्स्यात् | 155 |
| हरिणा निर्मिते हेतु· | 148 |
| हरीशयोः स्वादिसर्वे | 158 |
| हरीशयोर्जीवता किं | 162 |
| हरीशयोर्वाचकानां | 158 |
| हरीशयोस्समं तस्मात् | 151 |
| हरेर्जन्मादिकं नैव | 163 |
| हेतुतावच्छेदकं तु | 145 |
| हेतुश्चेदापतत्येव | 149 |